रैः पूर्वमभीष्टसंश्रया २ यासांप्रतंचोद्धृत ३ याचस्मृता-
तत्क्षणमेवहन्तिनः ४ सर्व्वाबाधाप्रशमनं ५ अत्रवैरिवि-
नाशनमित्यत्ररोगनाशनमित्याद्यूह्यम्। एवंदैत्यतापि-
तैरित्यत्रापि। सर्वमङ्गलमङ्गल्ये ६ सृष्टिस्थितिविनाशा-
नां ७ शरणागतदीनार्त्त ८ सर्वस्वरूपेसर्वेशे ९ एतेऽ-
नुग्रहेनवश्लोकाः ९ वश्येतुविशेषः। ओं ह्रीं रक्तचा-
मुण्डेतुरुतुरुअमुकंमेवशमानयस्वाहा। अनेनप्रत्यध्या-
यमाद्यन्तयोः पूजासर्वान्ते अयुतमन्त्रजपः। अयुत-
होमश्चहोमयेत्कटुतैलेनरक्तचन्दनराजिकाः। सहस्राहु-
तिमात्रेणराजानंवशमानयेत्। मधुनाशोकपुष्पंचरा-
त्रौहुत्वातुपूर्ववत्। चक्रवर्तीभवेद्वश्य चण्डीमन्त्रप्र-
भावतः। अन्ते शतंब्राह्मणाः कुमार्य्यश्चभोजनीयाः।
धनार्थंविल्वपत्रैः पूजावश्यार्थंकरवीरजैः। जपाकुसु-
मैर्वा पुत्रार्थंतुलसीदलैः। पुष्ट्यर्थंपङ्कजैः महाकार्य्या-
र्थंप्रयोगेतुषोडशमाषैःस्वर्णमूर्त्तिं कृत्वाकलशस्थापनं च
कृत्वातदग्रेघटार्गलयन्त्रे षट्कोणयन्त्रेवादीपंस्थाप-
येत्। महतिकार्य्ये जपपञ्चाश ५१ द्दिनानिमध्येचतु-
र्विंशतिदिनानि २४ तदर्द्धमल्पे १२। एवमेवमूर्त्तेःस्वर्ण-
परिमाणमपिबोध्यम्। महतिकार्य्येब्राह्मणाः ३ प्रयोग-
कर्त्तारः। अल्पेएकएव ॥निग्रहेतु॥ सर्वाबाधाप्रशमनमि-
त्यस्याग्रे एवमुक्त्वासमुत्पत्येतिपठेत्। अस्मिन्प्रयोगे-
तर्प्पणमपिकुर्यात्। त्रयोदशपात्राणिदुग्धेनापूर्याग्रे-

न्तयोः पुष्पाञ्जलिंदत्वाप्रतिश्लोकंप्रथमाध्यायदेवतांत-
र्प्पयामिइतिप्रयोगेणतर्पयेत् ॥ तथात्रयोदशस्वग्निषु-
क्रमात्तदध्यायदेवता आवाह्य संपूज्यप्रतिमन्त्रमोंप्रथ-
माध्यायदेवतायैनमः स्वाहेतिमन्त्रेणपायसेनजुहुयात् ॥
प्रत्यहंयावत्प्रयोगसमाप्तिः श्लोकंप्रत्यध्यायं वापठेत् ॥
दीपेषुअक्षतपुञ्जेषु जलपात्रेषुअग्निषु कुमारीषुवाका-
र्यंइत्युपदेशः ॥ अथैतत्स्तोत्रपाठेडामरकल्पोक्तन-
वार्णसंपुटीकरणप्रयोगविधिः ॥ तत्रादौतदुद्धारः ॥ ऐं
बीजमादौन्दुसमान दीप्तिंह्रींसूर्य्यतेजोद्युतिमद्द्वितीय-
म ॥ क्लींचापिवैश्वानरतुल्यरूपंतृतीयमानन्त्यसुखा-
यचिन्त्यम् ॥ चाशुद्धजाम्बूनदकान्तितुर्यंरमुंपञ्चमंवैस्तु
तरंप्रकल्प्यम् ॥ डांषष्ठमुग्रार्त्तिहरंसुनीलंयैसप्तमंकृष्णा-
तरंरिपुघ्नम् । विपाण्डुरंत्वष्टममादिसिद्धंच्चेधूम्रवर्णंन-
वमंविशालमिति ॥ ऐं ह्रीं क्लीं चामुण्डायैविच्चे इति
नवाक्षरोमन्त्रः ॥ अस्यप्रयोगः ॥ नाभिमात्रेजलेसह-
स्त्रजपात्तकवितासिद्धिः ॥ अयुतजपेराजबन्धनसङ्कटा
दिभ्योमोक्षः ॥ अस्मिन्नवाक्षरेमन्त्रेमहालक्ष्मीर्व्यव-
स्थिता । तस्मात्सुसिद्धःसर्वेषांसर्वदिक्षुप्रदीपकः ॥ इ-
त्यनेनास्यसिद्धादिचक्रशोधनंनास्तीतिसूचितम्। नवाक्ष-
रस्यऋषयोब्रह्मविष्णुमहेश्वराः ॥ छन्दांस्युक्तानि-
मुनिभिर्गायत्र्युष्णिगनुष्टुभः ॥ देव्यःप्रोक्तामहापूर्वा-
कालीलक्ष्मीसरस्वती । नन्दाशाकम्भरीभीमाःशक्तयो-

स्यमनोःस्मृताः । स्यूरक्तदन्तिकादुर्गाभ्रामर्यो बीज-
सञ्ज्ञयाः । अग्निर्वायुर्भगास्तत्वंफलंवेदत्रयोद्भवं । स-
र्वाभीष्टप्रसिध्यर्थंविनियोगउदाहृतः । अथप्रयोगः ॥
अस्यश्रीनवार्णमन्त्रस्य ब्रह्मविष्णुमहेश्वराऋषयःगा-
यत्र्युष्णिगनुष्टुभ श्छन्दांसि॥ महकालीमहालक्ष्मीमहा-
सरस्वत्योदेवताः नन्दाशाकम्भरीभीमाः शक्तयः॥रक्तद-
न्तिकादुर्गाभ्रामर्यो बीजानिअग्निवायुभगास्तत्वानि स-
र्वाभीष्टसिद्ध्यर्थंजपेविनियोगः ॥ ततऋष्यादिन्यासंकु-
र्यात् ॥ यथा ॥ ब्रह्मविष्णुमहेश्वरेभ्योनमः शिरसि ॥
गायत्र्युष्णिगनुष्टुप्छन्दोभ्योनमोमुखे । महाकाली-
महालक्ष्मीमहासरस्वतीदेवताभ्योनमोहृदि ॥ नन्दा-
शाकम्भरीभीमाशक्तिभ्योनमः दक्षिणस्तने । श्रीरक्त-
दन्तिकादुर्गाभ्रामरीबीजेभ्योनमः वामस्तने अग्निवायु-
सूर्य्यतत्वेभ्योनमः हृदये । उक्तंच । ऋषिश्छन्दोदैव-
तानिशिरोमुखहृदिन्यसेत् । स्तनयोः शक्तिबीजानि-
तत्वानिहृदयेपुनः । अथविशेषमाह ॥ मन्त्राणांपल्ल-
वोवासोमन्त्राणांपल्लवः शिरः । शिरः पल्लवसंयुक्तो-
मन्त्रः पुष्ट्यादिसाधकः । हुंकारपल्लवोपेतोमारणेब्रा-
ह्मणंविना । यन्त्रभञ्जनकार्य्येषुसुघोरभयनाशने । व-
षडन्तः प्रकल्प्यस्तुग्रहबाधाविनाशकः । उच्चाटनेतुसं-
प्रोक्तोमन्त्रः फट्पल्लवान्वितः । एतेपल्लवास्तुतत्तत्कर्म्म-
णि चण्डीपाठेपिश्लोकादौयोज्याः । तथान्यासहीनो-

भवेन्मूकोमृतःस्याच्छिरसाविना । अपास्तवासोनग्नः स्यात् सुप्तः स्यादासनंविना । गुरुंविनावृथामन्त्रः सव्यजापस्तुशून्यकः । निर्व्वीर्यो दुष्टदत्तः स्यादन्यबीजस्तुकीलितः । दुष्टदत्तः दुष्टायदत्तइत्यर्थः । देवछन्दर्षिहीनोयः सतुसुप्तोभुजङ्गमः । मूकादयोमन्त्रावर्ज्याः ॥ वैदिकेनपल्लवादिविचारः ह्रीं चण्डिकायै इत्यनेनास्यमन्त्रस्यस्तोत्रस्यचषडङ्गकरन्यासौ । हृदयायनमः । शिरसेस्वाहा । शिखायै वषट् । कवचायहुम् । नेत्रत्रयायवौषट् । अस्त्रायफडितिक्रमः । अस्त्रंसर्वदिक्षुबोध्यम् । नवबीजमन्त्रान्ते चण्डिकातृप्यतामिति मन्त्रेणतर्प्पणम् । एवंहोमादिषुज्ञेयम् । अथयन्त्रमाह । लिखेदष्टदलंपद्मं कुंकुमागुरुचन्दनैः । ततश्चतुर्विंशदलंभूपुरेणसमन्वितम् । पद्ममध्येलिखेच्चक्रंषट्कोणंचण्डिकामयम् । षट्कोणचक्रमध्यस्थमाद्यंबीजत्रयं न्यसेत् । तत्रमध्यबीजेमहालक्ष्मीः तद्दक्षिणेमहाकालीवामेसरस्वती पूर्वादिषुषट्सुकोणेषुबीजान्यन्यानिविन्यसेत् । इदंपूजायन्त्रम् । पद्मासनाद्यन्यतमसमासनम् । तथासप्तशतीश्लोकैर्न्यासः खड्गिनीशूलिनीत्यादिपठित्वाश्लोकपञ्चकम् । आद्यंकृष्णातरंबीजंध्यात्वासर्वाङ्गकंन्यसेत् । आद्यमैमिति शूलेनपाहिनोदेवीत्यादिश्लोकचतुष्टयम् । पठित्वासूर्य्यसदृशंद्वितीयं सर्वतोन्यसेत् । द्वितीयम् ह्री मिति सर्वस्वरूप-

इत्यादिश्लोकानांपञ्चकंपुनः । पठित्वास्फटिकाभासं-
तृतीयसर्वतोन्यसेत् तृतीयं क्लीमिति। उक्तै रेवश्लो-
कैरावृत्तिद्वयेनषडङ्गन्यासोपिक्वचिदुक्तः। ततः षडङ्गं-
कुर्वीतविभक्तैर्मूलवर्णकैः । एकेनैकेनवैकेनचतुर्भि-
र्युगलेनच । समस्तेनचमन्त्रेणकुर्य्यादङ्गानिदद्सु-
धीः । एवंन्यासविधिंकृत्वासृष्टिमुद्रांविलोकयेत्। त-
तः परिषिंचतिपूजार्थंद्रव्याणिनवबीजतः । तलपृ-
ष्ठोद्भवांमुद्रांदत्वास्त्रेणावगुंठयेत् । अर्घपात्रंप्रतिष्ठा-
प्यपूरयेच्छुभवारिणा । गन्धपुष्पाक्षतांस्तत्रविन्य-
स्यन्नृपनन्दन । ध्यात्वासर्वाणितीर्थानिहस्तौदत्वा-
भिमन्त्रयेत्। रक्षार्थंतस्यकर्त्तव्याचक्रमुद्रास्त्रसंयुता।
अर्घोदकेनसंस्कारंपूजाद्रव्यस्यपूर्ववत् ॥ अथमहाका-
ल्यादिदेवतात्रयध्यानम् ॥ खड्गंचक्रगदेषुचापपरिघान्-
शूलंभुशूण्डींशिरः शंखंसन्दधतींकरैस्त्रिनयनांसर्वाङ्गभू-
षावृताम्। नीलाश्मद्युतिमास्यपाददशकांसेवेमहाका-
लिकांयामस्तौच्छयितेहरौकमलजोहन्तुंमधुंकैटभम्॥१॥
अक्षस्त्रक्परशूगदेषुकुलिशंपद्मंधनुः कुण्डिकांदण्डंश-
क्तिमसिंचचर्म्मजलजंघण्टांसुराभाजनम्। शूलंपाश-
सुदर्शनेचदधतींहस्तैःप्रवालप्रभांसेवेसैरिभमर्द्दिनीमिह-
महालक्ष्मींसरोजस्थिताम् ॥ २॥ घण्टाशूलहलानिशं-
खमुशलेचक्रंधनुःसायकंहस्ताब्जैर्दधतींघनान्तरलसच्छी-
तांशुतुल्यप्रभाम् ॥ गौरीदेहसमुद्भवांत्रिजगतामाधा-

रभूतांमहापूर्वांमत्रसरस्वतीमनुभजेशुंभादिदैत्यार्द्दिनी-म् ॥ ततउक्तमन्त्रैः पञ्चोपचारैः पूजांकृत्वाजपेल्लक्षचतुष्टयम् । तद्दशांशतः पायसान्नेनजुहुयात् । पूजितेहेमरेतसि एतदेवास्यपुरश्चरणम् । मार्कण्डेयपुराणोक्तं नित्यंचण्डीस्तवंपठन् । पुटितंमूलमन्त्रस्यजपेनाप्नोतिवाञ्छितमिति ॥ अथशतण्डीविधिः ॥ शङ्करस्यभवान्यावाप्रासादेनिकरेशुभम् । मण्डपंद्वारवेद्याढ्यंकुर्य्यात्सुध्वजतोरणम् । तत्रकुण्डंप्रकुर्वीतप्रतीच्यांमध्यतोपिवा । स्नात्वानित्यक्रियांकृत्वावृणुयाद्दशवाडवान् । जितेन्द्रियान्सदाचारान्कुलीनान्सत्यवादिनः । वाडवान्ब्राह्मणान् । व्युत्पन्नान् । चण्डिकापाठरतान् लज्जादयावतः । मधुपर्कविधानेनस्वर्णवस्त्रादिदानतः जपार्थमासनंमालांदद्यात्तेभ्योपिभोजनम् । तेहविष्यान्नमश्नन्तोमन्त्रार्थगतमानसाः । भूमौशयानाः प्रत्येकंजपेयुश्चण्डिकास्तवम् ॥ मार्कण्डेयपुराणोक्तंदशकृत्वः सुचेतसः नवार्णंचण्डिकामन्त्रंजपेयुश्चायुतंपृथक् । पृथक्संपुटीकरणजपादितिशेषः । प्रत्येकंब्राह्मणैरयुतजपः कार्य्यः । अथाष्टमीनवमीचतुर्द्दशीपौर्णमासीषु यथाशतावृत्तिसमाप्तिर्भवति तथाप्रारम्भः कर्त्तव्यइति साम्प्रदायिकाः । यजमानः पुजयेच्चकन्यानांनवकंशुभम् ॥ द्विवर्षाद्यादशान्तास्ताः कुमारीः परिपूजयेत् काब्दायाः प्रीत्यभावाद्रुद्राब्दातुविवर्ज्जिता । तासांक्र

मेणनामानि ॥ कुमारी १।२ त्रिमूर्त्तिः २।३ कल्याणी ३।४ रोहिणी ३।४ रोहिणी ४।५ कालिका ५।६ चण्डिका ६।७ शाम्भवी ७।८ दुर्गा ८।९ सुभद्रा ९।१० एतैरेवनाममन्त्रैः तासांपूजा । तासामावाहनेमन्त्रःप्रोच्यतेशङ्करोदितः । यथा । मन्त्राक्षरमयींमक्ष्मींमातृणांरूपधारिणीम् । नवदुर्गात्मिकांसाक्षात्कन्यामावाहयाम्यहमित्यावाह्यपूजयेत् । मन्त्रोयथा । जगत्पूज्ये जगद्वन्द्ये सर्वशक्तिस्वरूपिणि । पूजांगृहाणकौमारीजगन्मातर्नमोस्तुते ।१। त्रिपुरांत्रिपुराधारांत्रिवर्गज्ञानरूपिणीम् । त्रैलोक्यवन्दितांदेवींत्रिमूर्त्तिंपूजयाम्यहम् । २। कलात्मिकांकलातीतांकारुण्यहृदयांशिवाम् । कल्याणजननींदेवींकल्याणींपूजयाम्यहम् ॥ ३ ॥ अणिमादिगुणाधारामाकाराद्यक्षरात्मिकाम् । अनन्तशक्तिकांलक्ष्मींरोहिणींपूजयाम्यहम् ॥ ४ ॥ कामचारींशुभांकान्ताकालचक्रस्वरूपिणीम् । कामदांकरुणोदारांकालिकांपूजयाम्यहम् ॥ ५ ॥ चण्डवीरांचण्डमायांचण्डमुण्डप्रभञ्जिनीम् ॥ पूजयामिसदादेवींचण्डिकांचण्डविक्रमाम् ॥६॥ सदानन्दकरींशान्तांसर्वदेवनमस्कृताम् । सर्वभूतात्मिकांलक्ष्मींशाम्भवींपूजयाम्यहम् ॥ ७ ॥ दुर्गमेदुस्तरेघोरेभवदुःखविनाशिनीम् । पूजयामिसदाभक्त्यादुर्गांदुर्गार्तिनाशिनीम् ॥ ८ ॥ सुन्दरींस्वर्णवर्णाभांसुखसौभाग्यदायिनीम् । सुभद्रजननींदेवींसुभद्रांपूजयाम्यहम् ॥९॥

एतैर्म्मन्त्रैः पुराणोक्तैस्तांतांकन्यांसमर्च्चयेत् । तत्रहीनाधिकाङ्गीकुष्ठव्रणयुताअन्धाकाणा कुरूपाकेकरारोमयुग्देहादासीजारोगिण्यइत्यवमाद्यावर्ज्याः । विप्रांसर्वेष्टसंसिद्धौयशसेक्षत्त्रियोद्भवाम् । वैश्यजांधनलाभायपुत्राप्त्यैशूद्रजांयजेदिति । गन्धपुष्पधूपदीपभक्ष्यभोज्यैर्य्यथाशक्तिवस्त्राभरणैश्चपूजयेत् ॥ अथपूजनप्रकारः । वेद्यांविरचितेरम्येसर्वतो भद्रमण्डले घटंसंस्थाप्यविधिवत्तत्रावाह्याच्च्र्ययेच्छिवाम् । तदग्रेकन्यकाश्चापिपजयेद्ब्राह्मणानपि । उपचारैस्तुविविधैर्न्नवार्णवर्णानपि । तत्र । ओं कारः प्रथमं पीठंपूर्णपीठमतः परम् ॥ तृतीयं कामपीठंचपूजयेत्संप्रदायतः । पूर्वादिदिक्षुपीठस्यगणेशादिचतुष्टयम् । गणेशक्षेत्रपालौचपादुकेबटुकास्त्रयः । आग्नेयादिचदुर्द्दिक्षुपूज्यंदेवीचतुष्टयम् । जयाचविजयाचैवजयन्तीचापराजिता । पूर्वोक्तयन्त्रे पूर्वकोणेसरस्वतीसहितोब्रह्मा श्रीसहितोविष्णुर्नैर्ऋत्ये उमयासहितः शिवोवायव्ये । षट्कोणचक्रमध्यस्थमध्यबीजेमहालक्ष्मीः तद्दक्षिणेमहाकाली । तद्वामेमहासरस्वती । उत्तरेसिंहः । दक्षिणेमहिषः । षट्कोणचक्रेषु । नन्दजा १ रक्तदन्तिका २ शाकम्भरी ३ दुर्गा ४ भीमा ५ भ्रामर्य्यः ६ । सबिन्दुनामाद्यर्णाद्यास्ताराद्याश्चासांनाममन्त्राः पूजादौज्ञेयाः । ओं नन्दजायै नम इति प्रयोगः । अष्टपत्रेषुब्रह्माणी १ माहेश्वरी २ कौ-

मारी ३ वैष्णवी ४ वाराही ५ नारसिंही ६ इन्द्राणी ७ चामुण्डा ८ उक्तरीत्यानाममन्त्रैः पूज्याः । ॐ ब्रंब्रा ह्माण्यै नमइत्यादिप्रयोगः । ततोविष्णुमायादिचतुर्विंशतिदेवताश्चतुर्विंशतिपत्रेषु प्रागादिक्रमेणनाममन्त्रैः पूज्याः । ताश्च । विष्णुमाया १ चेतना २ बुद्धिः ३ निद्रा ४ क्षुधा ५ छाया ६ शक्तिः ७ तृष्णा ८ क्षान्तिः ९ जातिः १० लज्जा ११ शान्तिः १२ श्रद्धा १३ कीर्त्तिः १४ लक्ष्मीः १५ धृतिः १६ वृत्तिः १७ श्रुतिः १८ स्मृतिः १९ दया २० तुष्टिः २१ पुष्टिः २२ माता २३ भ्रान्तिः २४ नालमूलेतुआधारः १ कूर्म्मः २ शेषः ३ पृथ्वी ४ भूपुरकोणेषु गणेशः । १ क्षेत्रपालः २ बटुकः ३ योगिनी ४ एतेपूज्याः पूर्वादिदिक्षुक्रमेणइन्द्राद्याः इन्द्रः । १ अग्निः २ यमः ३ निर्ऋतिः ४ वरुणः ५ वायुः ६ सौम्यः ७ ईशानः ८ अनन्तः ९ ब्रह्मा १० ततोवज्राद्याः । वज्रं । १ शक्तिः २ दण्डः ३ खड्गः ४ पाशः ५ अंकुशः ६ गदा ७ त्रिशूलम् ८ चक्रम् ९ पद्मम् १० पूज्याः । एवंचतुर्द्दिनंकृत्वापञ्चमेहोममाचरेत् । तत्रप्रथमदिने-एकावृत्तिः । द्वितीयदिनेद्वे तृतीयेतिस्रः । चतुर्थेचतस्रः प्रतिब्राह्मणम् । होमद्रव्याणि ॥ पायसान्नैस्त्रिमध्वक्तै द्राक्षारंभाफलादिभिः । मातुलिङ्गैरिक्षुदण्डैर्नारिकेरैः पुरैस्तिलैः । जातीफलैराम्रफलैरन्यैर्म्मधुरवस्तुभिः । सप्तशत्यादशावृत्याप्रतिमन्त्रंहुतंचरेत् । अयुतञ्चनवार्णे

नस्थापितेग्नौविधानतः । कृत्वावरणदेवानांहोमंतन्नाममन्त्रतः । कृत्वापूर्णाहुतिंसम्यक्देवमग्निंविसृज्यच । अभिषिंचेच्चयष्टारंविप्रौघः कलशोदकैः निष्कंसुवर्णमथवाप्रत्येकंदक्षिणांदिशेत् । भोजयेच्चशतंविप्रान्भक्ष्यभोज्यैः पृथग्विधैः । तेभ्योपिदक्षिणान्दत्वागृह्णीयादाशिषस्ततः । एवंकृतेजगद्वश्यंसर्वंनश्यन्त्युपद्रवाइति । एतद्दशगुणंकुर्य्याच्चण्डीसाहस्रकेविधिम् । विघ्नावतः सदाचारान्ब्राह्मणान्वृणुयाच्छ्रुतम् । प्रत्येकंचण्डिकापाठान्विदध्युस्तेदिशामितान् । चतुर्द्धिनैरुक्तरीत्येतिशेषः । अयुतंप्रजपेयुस्तेप्रत्यर्कंनववर्णकम् ॥ पूर्वोक्ताः कन्यकाः पूज्याः पूर्वमन्त्रैः शतंशुभाः वेदाहमेवंसंपाद्यहोमंकुर्य्युः प्रयत्नतः । सप्तशत्याश्शतावृत्याप्रतिमन्त्रविधानतः । लक्षसंख्यानवार्णेन पूर्वोक्तैर्द्रव्यसंचयैः । होतृभ्योदक्षिणांदत्वापूर्वोक्तान्भोजयेद्द्विजान् । सहस्रसंमितान्साधून्देव्याराधनतत्परान् एवंसहस्रसङ्ख्याकेकृतेचण्डीविधौनृणाम् । सिद्धत्यभीप्सितंसर्वंदुःखौघश्चविनश्यति । मारीदुर्भिक्षरोगाद्यानश्यन्तिव्यसनोच्चयः ॥ एतद्दशगुणोविधिरयुतचण्डयांतद्दशगुणोविधिर्लक्षचण्डयांशतब्राह्मणैरेववाचत्वारिंशद्दिनैरयुतचण्डीकार्य्या तत्रप्रथमेदशके एकैकावृत्तिः द्वितीयदशकेद्वेतृतीयेतिस्रः चतुर्थेचतस्र । इत्यादिवोध्यमिति अथचण्डीपाठहोमेकवचमन्त्रेणहोमनिषेधः

अन्धकघ्नमहादैत्योदुर्गाहोमपरायणः। कवचाहुतिमा-
त्रेणमहेशेननिपातितइति तत्रकवचम् शूलेनपाहीत्यादि
श्लोकचतुष्टयम्। तदाहुतिचतुष्टयम् महालक्ष्म्यैस्वाहेत्ये-
वेत्यभियुक्ताः अथप्रयोगक्रमः तन्त्रोक्तविधिनाशिवा-
लयेदेव्यालयेवामण्डपंविधायतन्मध्ये वेदींचनिर्म्माय
प्रतीच्यांकुण्डमध्येवाकृत्वा॥ कृतनित्यक्रियःस्वस्तिवा-
चनंकृत्वासङ्कल्पंकुर्य्यात् यथा ॐतत्सत् अद्येत्याद्य
मुकगोत्रस्यामुकशर्म्मणोममसपरिवारस्य सर्व्व वाधाप्रस
मन पूर्वकशत्रुचौरराजशस्त्रानलहेतुकभयाभावत्रिवि-
धोत्पातशमनधनधान्यसुतान्वितत्वनिर्भयत्वसर्वसङ्कट-
विमुक्ति वलपुष्टि धनवृद्धिसुखसौमनस्य नैरुज्यप्राप्ति
कामोऽद्यादि यथा कालंशतचण्डी विधान महंक-
रिष्ये इतिसङ्कल्पंविधाय॥ मातृकास्थापननन्दीश्राद्धे
विधायपुरोक्तलक्षणान्दशब्राह्मणान् मधुपर्कवस्त्रहेमा
दिनावृणुयात् तेचयजमानदत्तासनेषुतद्दत्तमालाभिः
स्वस्थचित्ताभगवतींस्मरन्तः सप्तशतीमूलमन्त्रेणवेद्यां-
सर्वतोभद्रेस्वर्णरजतताम्राद्यन्यतमंघटंस्थापयित्वातत्रदु-
र्गामावाह्यषोडशोपचारैः संपूज्यतदग्रे प्रत्येकंदशकृ-
त्वः सप्तशतीमयुतंचनवार्णंजपेयुः हविष्यभोजनब्र-
ह्मचर्य्यभूशयनास्पृश्यास्पर्शादिनियमांश्चरेयुः यजमा-
नश्चवस्त्रालङ्कार विविधपक्वान्नदानादिनाउक्तलक्षणल-
क्षिताः कन्याआवाह्य जगत्पूज्येत्यादिस्वस्वमन्त्रैः

पूजयेत् एवंचत्वारिदिनानिजपंकुमारीपूजांसमाप्य-
पञ्चमदिनेकुण्डे स्थण्डिलेवागमोक्त विधिनावह्निं संस्था-
प्यपायसान्नादिभिरुक्त द्रव्यै र्जुहुयात् सप्तशत्याः प्रति-
श्लोकंदशवारंनवार्णेनायुतंचहोमेसङ्ख्याएकैकोद्विजः स
कृत्सप्तशतीप्रतिश्लोकंसहस्रंमूलेनजुहुयात् । ततआ-
वरणदेवतानांनाममन्त्रैस्तारादिस्वाहान्तैरेकैकामाहुतिं-
दत्वाकुम्भस्थांदेवींसंपूज्यबलिदानंविधायहोतृभ्यः प्र-
त्येकंनिष्कंनिष्कंअशक्तौ सुवर्णमितंस्वर्णंदद्यात् । इ-
तिशतचण्डीप्रकारः ॥ अथसहस्रचण्डीविधानम् ॥
यथा । तत्रशतविप्रवरणम् । एतेशतंब्राह्मणाः प्रत्ये-
कंदशदशसप्तशतीपाठान्कुर्य्युः । अयुतमयुतंनवार्ण-
जपंचकुर्य्युः शतकन्याश्चभोजयाः पूज्याश्च । एवंदश-
दिनेषुसमाप्तेषु एकादशेह्निसप्तशतीशतावृत्याप्रतिश्लो-
कं लक्षसङ्ख्यानवार्णैर्होमः । शेषंपूर्ववत् । इतिसह-
स्रचण्डीविधानम् । एवंसहस्रचण्डीदशगुणोऽयुतचण्डी-
विधिः । तद्दशगुणोलक्षचण्डीविधिरिति । जपेहोमे-
दक्षिणायांकुमारीभोजनेब्राह्मणभोजनेचदशगुणत्वमि -
ति। अथप्रयोगान्तराणिकात्यायनीतन्त्रोक्तानि । प्र-
तिमन्त्रमाद्यन्तयोः प्रणवंजपेन्मन्त्रसिद्धिः अग्रेसर्व-
त्रश्लोकपदंमन्त्रोपलक्षणम् । सप्रणवमनुलोमव्याहृति-
त्रयमादावन्तेतुविलोमंतदित्येवंप्रतिश्लोकंकृत्वाशतावृ -
त्तिपाठेऽतिशीघ्रं सिद्धिः । प्रतिश्लोकमादौजातवेदस-

इतिऋचंपठेत् । सर्वकामसिद्धिः । ऋचमपिलिख्य-
ते । जातवेदसेसुनवामसोममरातीयतोनिदहातिवे-
दः । सनः पर्षदतिदुर्गाणिविश्वानावेवसिन्धुंदुरिता-
त्यग्निः । इतिऋक् । अपमृत्युवारणाय आदावन्ते
शतंत्र्यम्बकमन्त्रंजपेत् । प्रतिश्लोकंतन्मन्त्रजपइत्यन्य-
त् प्रतिश्लोकंशरणागतदीनार्त्तश्लोकंपठेत् सर्वकार्य्यसि-
द्धिः प्रतिश्लोकंकरोतुसानः शुभहेतुरीश्वरीत्यर्द्धंपठेत्स-
र्वकामाप्ति: ७ स्वाभीष्ट वरप्राप्त्यैएवंदेव्यावरंल-
ब्ध्वेतिश्लोकंप्रत्तिश्लोकं पठेत् । ८ सर्वापन्निवारणार्थं-
प्रतिश्लोकंदुर्गेस्मृतेतिपठेत् ॥ ९ ॥ अस्यकेवलस्यापि-
श्लोकस्यकार्य्यानुसारेणलक्षमयुतंसहस्रंशतंवाजपः १०
सर्वाबाधेत्यस्यलक्षजपेश्लोकोक्तंफलम् ११ । इत्थंयदा-
यदेति श्लोकस्यलक्षजपेमहामारीशान्तिः १२ ततोवव्रे
नृपोराज्यमितिमन्त्रस्यलक्षजपेपुनःस्वराज्यलाभः १३ ।
हिनस्तिदैत्यतेजांसीत्यनेनसदीपबलिदानेघण्टाबन्धने-
चबालग्रहशान्तिः १४ । आद्यावृत्तिमनुलोमेन पठित्वा
ततोविपरीतक्रमेणद्वितीयांकृत्त्वापुनरनुलोमेनेत्येवमा-
वृत्तित्रयेणउक्तेषुप्रकारेषुशीघ्रंकार्य्यसिद्धिः ॥ १५ ॥ स-
र्वापन्निवारणायदुर्गे स्मृतेत्यर्द्धम् ततः ॥ यदन्तिकेय-
च्चदूरकेभयंविन्दतिमामिह । पवसानरीतज्जहि इतिऋ-
चंतदन्तेदारिद्र्यदुःखेत्यर्द्धमेवंकार्य्यानुसारेणलक्षमयुतंस
हस्रं वाशतंजपः १६ । कांसोस्मितांहिरण्यप्राकारामार्द्रां-

ज्वलन्तींतृप्तांतर्प्पयन्ती पद्मे स्थितांपद्मवर्णांतामिहो-
पह्वयेश्रियम्। इतिऋच
प्रतिश्लोकंपठेल्लक्ष्मीप्राप्तिः। प्रतिश्लोकमनृणाअस्मि-
न्नितिमन्त्रंपठेद्दणपरिहारः १७ मारणार्थमेवमुक्त्वासमु-
त्पत्येति। प्रतिश्लोकंपठेत्। मारणोक्तवृत्तिभिः फल-
सिद्धिः। १८ ज्ञानिनामपिचेतांसीतिश्लोकजपमात्रेणस-
द्योमोहनमित्यनुभवसिद्धम्। प्रतिमन्त्रं तत् श्लोकपाठे-
त्ववश्यंमोहनम् १९ रोगानशेषानितिश्लोकस्यप्रतिश्लोके-
पाठेसकलरोगनाशः २० तन्मात्रजपेपिसः २१ इत्युक्ता
सातदादेवीगंभीरेतिश्लोकस्य प्रतिश्लोकपाठेपृथग्जपे-
वाविद्याप्राप्तिः २२। वाग्वैकृतनाशश्च २३ भगवत्याकृ-
तंसर्वमित्यादिद्वादशोत्तरशताक्षरोमंत्रः सर्वकामदः स-
र्वापन्निवारकश्च २४। देविप्रपन्नार्तिहरे इतिश्लोकस्यय-
थाकार्यंलक्षायुतसहस्रशतान्यतमेजपे प्रतिश्लोकपाठे-
वासर्वापन्निवृत्तिः सर्वकामावाप्तिश्च ॥ २५ ॥ एषुप्रयो-
गेषुप्रतिश्लोकंदीपाः केवलनमस्कारेणवासिद्धिः ॥२६॥ प्र-
तिश्लोकंकामबीजसंपुठितस्यैक चत्वारिंशद्दिनंत्रिरावृत्तौ
सर्वकामसिद्धिः॥२७॥एकविंशतिदिनमुक्तरीत्याप्रत्यहंद्वा-
दशावृत्तौवशीकरणम्॥२८॥मायाबीजसंपुठितस्यकूटप-
ल्लवसहितस्यसप्तदिनपर्यन्तंत्रयो दशावृत्तावुच्चाटनसि-
द्धिः॥२९॥ एकोनपंचाशद्दिनपर्यन्तं प्रतिश्लोकंश्रीबीजसं-
पुटितस्यपंचदशावृत्यालक्ष्मीप्राप्तिः ॥३०॥ अथकामना

भेदेनध्यानभेदः। वश्ये रक्तंपौष्टिकेकर्बुरम् उच्चाटनेधूम्रंमारणेकृष्णं सन्तानार्थंनीलोत्पलदलश्यामम् रत्नाकारध्यानंसर्वकामदंयुद्धे कालाग्निसमंजलभयेमहाशोषयुक्तं विषादिभयेपीयूष वृष्टियुक्तपूर्णचन्द्रसदृशंध्यायेत् इतिश्रीजीवनाथकृतेदीक्षाप्रकाशेसप्तशतीपाठविधिः। अथपार्थिवपूजाप्रकारः॥ ॐ सद्योजातंप्रपद्यामिसद्योजातायवैनमः। भवेभवेनातिभवेभवस्वमांभवोद्भवायनमोनमः। इतिमन्त्रेणमृत्तिकाग्रहणम् ॐ वामदेवायनमोज्येष्ठायनमः श्रेष्ठायनमोरुद्रायनमः कालायनमः। कलविकरणायनमोबल विकरणायनमोबलायनमोबलप्रमथनायनमः सर्वभूतदमनायनमोमनोन्मनायनमः इतिमंत्रेणजलक्षेपः। ततः ॐ अघोरेभ्योथघोरेभ्योऽघोरघोरतरेभ्यः सर्वेभ्यः सर्वशर्वेभ्योनमस्तेऽस्तुरुद्ररूपेभ्यः। इतिलिङ्गकरणं। ॐ तत्पुरुषायविद्महेमहादेवायधीमहितन्नोरुद्रः प्रचोदयादितिबाणंकुर्यात्। ॐ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानांब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्माशिवोमेऽस्तुसदाशिवोम्। इतिवेदिकायांबाणंसंयोज्यध्यायेत्। तद्यथा ॐ ध्यायेन्नित्यंमहेशंरजतगिरिनिभंचारु चन्द्रावतंसंरत्नाकल्पोज्वलाङ्गंपरशुमृगवरभीतिहस्तंप्रसन्नम्। पद्मासीनंसमन्तात्स्तुतममरगणैर्व्याघ्रकृत्तिंवसानंविश्वाद्यंविश्वबीजंनिखिलभयहरंपंचवक्त्रंत्रिनेत्रम्। कर्पूरगौरंकरुणाव-

तारंसंसारसारंभुजगेन्द्रहारम् । सदारमन्तं हृदयारवि-
न्देभवंभवानीसहितंनमामि । कैलासपीठासनमध्य-
संस्थं भक्तैश्चनन्दनादिभिरर्च्च्यमानम् । भक्तार्तिदा-
वानलमप्रमेयंध्यायेदुमालिङ्गितमिन्दुभूषमितिध्यात्वा-
बिल्वपत्रंसगन्धपुष्पाक्षतंगृहीत्वा ऊँ मनोज्योतिरिति-
मंत्रेप्रणप्रतिष्ठांकुर्यात् । मंत्रोयथा । ऊँ मनोज्योति-
र्जुषतामाज्यस्यबृहस्पतिर्य्यज्ञमिमंतनोत्वरिष्टं यज्ञंश-
मिमंदधातुविश्वेदेवासइहमादयन्तामो प्रतिष्ठ ततइमंप
ठेत् । स्वामिन्सर्वजगन्नाथयावत्पूजावसानकम् । ता
वत्त्वंप्रीतिभावेनलिङ्गेऽस्मिन्सन्निधिंकुरु । ततः पा-
द्यम् । ऊँ भवायभवनाशायमहादेवायधीमहि । उ-
ग्रायचोग्रनाशायसर्वायशशिमौलिनेनमः । शिवाय-
इदंपाद्यम् । ऊँ साम्बशिवायनमः । इदमर्घ्यंस्वाहा ।
इदमांचमनीयंस्वधा । इमंमधुपर्कंस्वधा । इदमनुले-
पनम् । एतानिपुष्पाणि । ऊँ साम्बशिवायवौषट् ॥ बि-
ल्वपत्राणिदत्वा । ऊँ शर्वायक्षितिमूर्तयेनमः । ऐशा-
न्याम् । ऊँ भवायजलमूर्तयेनमः । प्राच्याम् ऊँ रुद्रा-
याग्निमूर्तयेनमः । आग्नेय्याम् ऊँ उग्रायवायुमूर्तयेन-
मः । दक्षिणस्याम् । ऊँ भीमायाकाशमूर्तयेनमः । नै-
र्ऋत्याम् । ऊँ पशुपतयेयजमानमूर्तयेनमः । वारुण्याम् ।
ऊँ महादेवायसोममूर्तयेनमः । वायव्याम् । ऊँ ईशा-
नायसूर्य्यमूर्तयेनमः । उत्तरस्याम् । ऊँ नमःशिवायेति

पुष्पांजलिंदद्यात् । एषधूपः नमः । एषदीपः नमः एतानिनैवेद्यानिनिवेदयामि । इदंताम्बूलंनमः ततः । नमः ॐ काररूपायनमोक्षरवपुर्भृते । नमोनादात्मनेतुभ्यंनमोबिन्दुकलात्मने ॥ अलिङ्गलिङ्गरूपायरूपातीतायतेनमः । त्वंमातासर्वलोकानांत्वमेवजगतः पिता । त्वंभ्रातात्वंसुहृन्मित्रंत्वंप्रियः प्रियरूपधृक् । त्वंगुरूस्त्वंगतिः साक्षात्त्वंपितात्वंपितामहः । नमस्तेभगवन्रुद्रभास्करामिततेजसे । नमोभवायरुद्रायउमया सहितायच । सर्वायक्षितिपालायसदासुरभिदेनमः । पशूनांपतयेचैवपावकामिततेजसे ॥ भीमायव्योमरूपायशब्दमात्रायतेनमः । महादेवायसोमायअमृतायनमोनमः । उग्राययजमानायनमस्तेकर्मयोगिने ॥ ॐ हरायनमः। ॐ महेश्वरायनमः ॥ॐ शूलपाणयेनमः॥

मृतिकाग्रहणम् निर्माणंकुयात् प्राणप्रतिष्ठाॐ शूलपाणेइहसुप्रतिष्ठितो भवमनोज्योतिरिति पठेत्

ॐ पिनाकधृतेनमः॥ॐ पशुपतयेनमः॥ॐ शिवाभनमः

आवाहनंपिनाकधृ स्नपनंकुर्यात् पूजनम्॥

इहागच्छइति

ॐ महादेवायनमः ॥

विसर्जनम्

पार्थिवस्यचलिंगस्ययन्मयापूजनंकृतम् ॥ अनेनभगवा
न्रुद्रोवांछितार्थंप्रयच्छतु ॥ इतिप्रणम्यलिङ्गानिविसर्ज
येत् । नमोभवायरुद्रायशिवायचनमोनमः ॥ ई-
शानायवृषांकायभीमोग्राभ्यांनमोनमः ॥ महादेवाय
गुप्तायवासुदेववरायच । वासुदेवायशान्ताय तथो-
मापतयेनमः ॥ नमश्चनीलकण्ठायशितिकण्ठायतेनमः ॥
गोपतेशंकरायैवसदासर्वमयायच ॥ प्रातस्सम्पूज्य
सायंचकृतांजलिपुटःस्थितः । ऊनविंशतिनामा-
निपठतेयोनरोत्तमः ॥ सपापैर्मुच्यतेसर्वैर्दिविदेवैश्च
पूज्यते ॥ तस्यस्तोत्रस्यपठनाद्दहेत्पापंशिवंव्रजेत् ।
वारं वारंप्रणमेत् । अर्द्धचन्द्राकारांप्रदक्षिणांकुर्य्या-
त् । गच्छगच्छपरंस्थानंस्वस्थानंपरमेश्वर । पूजारा-
धनकालेचपुनरागमानायच । ऊँ साम्बशिवपूजितो-
सिप्रसीदशिवस्वस्थानंगच्छेतिवदेत् । अथशिवरात्रि
व्रतविधिः । प्रातः स्नात्वानित्यकर्मकृत्वा मासपक्षा
द्युल्लिख्यममजन्मजन्मान्तरार्जितपापक्षयार्थमक्षयभोग
मोक्षप्राप्त्यर्थंशिवरात्रिव्रतमहंकरिष्ये इतिसंकल्पषो
डशोपचारैः शिवपूजांकुर्यात् । तत्रपूजा । आग-
च्छदेवदेवेशमर्त्यलोकहितेच्छया ॥ पूजयामिविधानेन-
प्रसन्नः सुमुखोभवेत्यावाहनम् ॥ पादासनंकुरुप्रा
ज्ञनिर्म्मलंस्वर्णनिर्म्मितम् । भूषितंविविधैरत्नैरिदंत्वं
पादुकासनम् । इत्यासनम् । गङ्गादिसर्वतीर्थेभ्यो

मयाप्रार्थनयाहृतम् । तोयमेतत्सुखस्पर्शंपाद्यार्थंप्रति गृह्यतामितिपाद्यम् । गन्धोदकेनपुष्पेणचन्दनेनसुगन्धिना । अर्घ्यंगृहाणदेवेशभक्तिं मेह्यचलांकुर्वित्यर्घ्यम् । मन्दाकिन्याः समानीतं हेमांभोरुहवासितम् । स्नानायतेमयाभक्त्यानीतंस्वीक्रियतांविभोइतिस्नानम् । वस्त्रं सूक्ष्मं दुकूलंचदेवानामपिदुर्लभम् । गृहाणत्वमुमाकान्तप्रसन्नोभवसर्वदा इतिवस्त्रम् । श्रीखण्डं चन्दनंदिव्यं मलयाचलसंभवम् । विलेपनं सुरश्रेष्ठगृहाणपरमेश्वरेतिगन्धः । यज्ञोपवीतंसहजंब्रह्मणानिर्मितंपुरा । आयुष्यंभववर्चस्वमुपवीतंगृहाणमे इतियज्ञोपवीतम् । माल्यादीनिसुगन्धीनिमालत्यादीनिवैप्रभो । मयाहृतानि पूजार्थं गृहाणपरमेश्वर इतिपुष्पम् । वनस्पतिरसोधूपोगन्धाढ्यः सुमनोहरः ॥ आघ्रेयः सर्वदेवानांधूपोयंप्रतिगृह्यताम् इतिधूपः । आज्यं त्रिवर्तिसंयुक्तं वह्निनायोजितंमया । दीपंगृहाणदेवेशत्रैलोक्यतिमिरापहम् इतिदीपः । इदंदिव्यान्नममृतंरसैषड्भिः समन्वितम् । गृहाणदेवदेवेशनैवेद्यमुमयासहेतिनैवेद्यम् । पूगीफलंमहद्दिव्यंनागवल्लीदलैर्युतम् । कर्पूरादिसमायुक्तं तांम्बूलंप्रतिगृह्यताम् । इतितांबूलम् । इदंफलंमयादेवस्थापितंपुरतस्तव । तेनप्रीतउमाधीशभवस्वर्गफलप्रदइतिफलस्थापनम् । हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः । अनन्तपुण्यफलदमतः शान्तिं प्रयच्छमेइति

दक्षिणा । ततः पुष्पांजलिंदत्वानीराजनंविधायप्रदक्षिणांकुर्यात् । अथशिवरात्रौप्रहरचतुष्टयेपूजाविधिः । नस्नानेननवस्त्रेणनचधूपेननार्चया ॥ तुष्यामिनतथापुष्पैर्यथारात्र्युपवासतः । ततोरात्रौप्रकर्तव्यंशिवप्रीणनतत्परैः । प्रहरेप्रहरेस्नानंपूजाचैवविशेषतः अत्रवीप्सयाप्रहरचतुष्टयपूजनंप्रतीयतइति । नरसिंहचर्य्यायाम् । शैवोवावैष्णवोवापियदिस्यादन्यपूजकः । सर्वंपूजाफलंहन्तिशिवरात्रिवहिर्मुखः । संवत्सरप्रदीपे दुग्धेनप्रथमंस्नानंदध्नाचैवद्वितीयके । तृतीयेतुतथाज्येन चतुर्थेमधुनातथा । ईशानसंहितायाम् । फाल्गुनेकृष्णा चतुर्दश्यांरविवारोयदाभवेत् । भौमोवापिभवेद्देविकर्तव्यंव्रतमुत्तमम् । शिवयोगस्ययोगेनतद्भवेदुत्तमोत्तमम् । शिवरात्रिव्रतंनामसर्वपापविनाशनम् ॥ आचाण्डालमनुष्याणांभुक्तिमुक्तिप्रदायकम् ॥ नागरखण्डे ॥ उपवासप्रभावेणबलादपिचजागरात् । शिवरात्रेस्तथातस्यलिंगस्यापिप्रपूजनात् ॥ अक्षयाँल्लभतेकामान्शिवसायुज्यमाप्नुयात् ॥ पद्मपुराणे ॥ वर्षेवर्षेमहादेविनरोनारीपतिव्रता ॥ शिवरात्रौमहादेवंकामम्भक्त्याप्रपूजयेत् ॥ ईशानसंहितायाम् ॥ एवमेवव्रतंकुर्यात्प्रतिसंवत्सरंव्रती । चतुर्दशाब्दिकंतद्विचतुर्विंशाब्दिकंतथा । सर्वान्कामानवाप्नोति सर्वपापैः प्रमुच्यते ॥ अथप्रयोगः ॥ प्रातरुदङ्मुखः । ॐ तत्सदित्यु-

श्चार्यसूर्यसोमइतिपठित्वाजलादीन्यादाय शिवरात्रिव्रतंह्ये तत्करिष्येहंमहाफलम् ॥ निर्विघ्नमस्तुमेचात्रत्वत्प्रसादाज्जगत्पते । इत्यनेनव्रतनियमग्रहणंकुर्यात् । पुनर्जलमादाय। ॐ सौभाग्यादिसमस्तभोगमोक्षावाप्तिकामः शिवरात्रिव्रतमहंकरिष्येइति । ततोमंत्रंपठेत् । चतुर्दश्यांनिराहारोभूत्वाशंभोः परेहनि । भोक्ष्ये हंभुक्ति मुक्त्यर्थंशरणंमेभवेश्वर ॥ ततोरात्रौप्रथमप्रहरे-प्रतिष्ठितेलिंगेअप्रतिष्ठितेवाप्रतिष्ठांविधायपूजांकुर्यात् । हः अस्त्रायफडितिपादघातत्रयेणमिभूनिः सार्घ्यं तेनैवतालत्रयेणकरत्रुटिकयादिग्बन्धनंभूत शुद्ध्यादिकंचविधाय । हांहृदयायनमः । हीं शिरसेस्वाहा । हुं-शिखायैवषट् । हैंकवचायहुं । हौंनेत्रत्रयायवौषट् । हः अस्त्रायफट् इतितालत्रयम् । छोटिकयादशदिग्बन्धनंकृत्वा हौमितिमन्त्रेणप्राणायामंविधायपार्थिवशिवलिंगेउक्तविधिनाशिवंपूजयेत् । तत्रायंविशेषः। हौंईशानायनमः । प्रथमप्रहरेदुग्धेनस्नापयित्वापुनर्जलेनस्नापयेत् । ततः । शिवरात्रिव्रतंदेवपूजाजपपरायणः ॥ करोमिविधिवद्दानंगृहाणार्घंमहेश्वरइत्यनेनार्घ्यं दत्वागन्धादिभिः पूजयित्वाप्रणम्यगीतवाद्यस्तवपाठतत्कथाश्रवणादिभिः प्रहरंनयेत् । तद्वदानंतज्जपः स्नानंतत्कथाश्रवणादिकम् । उपवासकृतोह्येतेगुणाः प्रोक्ताः पुरातनैः । अथद्वितीयप्रहरे । हौंॐ

अघोरायनमः । इतिदन्धास्नानम् ततः ऊँ नमः शिवा यशान्तायसर्वपापहरायच । शिवरात्रौददाम्यर्घ्यंप्रसीदउमयासह इत्यर्घ्यंदत्वापूजादिकंपूर्ववत् । ततस्तृतीयप्रहरे । ऊँ हौंसद्योजातायनमः । इतिघृतेनस्नानम् । अर्घ्य मंत्रस्तु । दुःखदारिद्रयशोकेनदग्धोहंपार्वतीप्रिय । शिवरात्रौददाम्यर्घ्य मुमाकान्तप्रसीदमे । अन्यतप्रथमप्रहरवत्कुर्य्यात् । चतुर्थप्रहरे । ऊँ हौं-तत्पुरुषायनमः । इतिमधुनास्नानम् । अर्घ्य मंत्रस्तु । मयाकृतान्यनेकानिपापानिहरशंकर ॥ शिवरात्रौददाम्यर्घ्य मुमाकान्तगृहाणमे । अन्यत्पूर्ववत् । ततः ऊँ नमः शिवायेतिमूलमन्त्रं जप्त्वाअविघ्नेनेतिमंत्रंपठेत । मन्त्रोयथा । ऊँ अविघ्नेनव्रतंदेवत्वत्प्रसादात्समर्पितम । क्षमस्वजगतांनाथत्रैलोक्याधिपतेहर । यन्मयात्रकृतंपुण्यंतत्तुभ्यंनिवेदितम् । त्वत्प्रसादान्महादेव व्रतमद्यसमर्पितम् । प्रसन्नोभवमेदेवसदातिंदेहिशंकर । त्वदालोकनमात्रेणपवित्रोस्मिनसंशयः । ततः परदिने ब्राह्मणान् भोजयित्वामंत्रंपठेत् । यथा ॥ संसार क्लेशदग्धस्यव्रतेनानेनशंकर । प्रसीदसुमुखोनाथज्ञानदृष्टिप्रदोभवेत्युत्कास्मरणंकुर्यात् । इतिशिवरात्रिपूजाविधानंसंपूर्णम् । अथशिवपूजायांविशेषः रात्रावुदङ्मुखः कुर्यातपूजांपूर्वमुखोदिवा ॥ शिवार्चनंसदाप्येवंशुचिः कुर्यादुदङ्मुखः सदेतिदिवारात्रौ । अत्रहेतुंदर्शयतिरु-

द्रयामले । नप्राचीमग्रतः शंभोर्न्नोदीचींशक्तिसंस्थिताम् । नप्रतीचींयतः पृष्टमतोदक्षंसमाश्रयेत् । यजमानः शंभोःप्राचीमवस्थितोयजनंनसमाश्रयेत् । शंभोर्जगत्संहारकस्याग्रतःसांमुख्यात् । पंचवक्त्रपक्षे प्रधानंवक्त्रंप्राचास्तुस्थितम् । एकवक्त्रपक्षे तद्रुपमाहादित्यपुराणेसौम्य मौलीन्दुसूच्यक्षमेकवक्त्रंचतुर्भुजम् । शूलपंकजहस्तंचवरदाभयपाणिकम् । आयताक्षंसुराराध्यंसर्वाभरणभूषितम् । शिवरूपंगृहेकुर्यात्प्रासादेवाप्यर्नान्दितम् । अत्राग्रेपूजानिषेधात् । देवाग्रेस्वस्थवाप्यग्रेप्राचीप्रोक्तागुरूत्तमैरित्यस्यनविषयइति किंत्वभिधानादिप्रसिद्धप्राचीपराग्राह्याएतदनुसारादेववक्ष्यमाणपूर्वाद्याग्नेयान्तपूजा यत्रैवभानुस्तुवियत्युदेतिप्राचीतितांवेदविदोवदति । अतः परांपूजकदेवयोश्चसदागमज्ञाः प्रवदन्तितांचेतिवचनात् । अथविशेषंदर्शयतिलिङ्गपुराणम् । विनाभस्मत्रिपुंड्रेणविनारुद्राक्षमालया । पूजितोपिसदाशंभुर्न्नस्यात्तस्यफलप्रदः । तस्मान्मृदापिकर्तव्यंललाटेचत्रिपुंड्रकमितिस्कन्दपुराणे । रुद्राक्षंकण्ठदेशेदशन ३२ परिमितंमस्तकेविंशतीद्वे ४० षट्षट्कर्णप्रदेशे ६ । ६ करमणियुगलेद्वादशद्वादशैव १२ । १२ बाह्वोरिन्दोः कलाभिः १६ । १६ पृथगितिचशिखासूत्रएकं १ मनुष्योवक्षस्यष्टोतरं १०८ यःकलयतिचशतंसस्वयंनीलकण्ठइति । संवत्सरप्रदी-

पे । त्रिपुरस्यवधेकालेरुद्रस्याक्ष्णोः पतन्तिये अश्रू-
णाविन्दवस्तेतुरुद्राक्षाअभवनभुवि । अधस्कान्दे ।
एकद्वित्रिचतुष्पंचषट्सप्तवसवोनव दशैकादशद्वादश
त्रयोदशचतुर्दश । एतेषांतुमुखानांहिदेवतासचशंक
रः । गुह्यंगुह्यतरंदेवकथयस्वयथार्थतः । श्रीशंकर-
उवाच ॥शृणुषण्मुखतत्वेनवक्त्रेवक्त्रेयथाक्रमम् । ए-
कवक्त्रः शिवः साक्षाब्रह्महत्यांव्यपोहति । द्विवक्त्रोदे
वदेवश्चगोवधादिविनाशकः । त्रिवक्त्रोदहनः साक्षाद्
भ्रूणहत्यांव्यपोहति । चतुर्वक्त्रः स्वयंब्रह्मानरहत्यां-
व्यपोहति । पंचवक्त्रः स्वयंरुद्रः कालाग्निर्नामनामतः ।
अगम्यागमनेचैवअभक्ष्यस्यापिभक्षणे । मुच्यतेसर्व-
पापेभ्यः पंचवक्त्रस्यधारणत् । षट्वक्त्रःकार्त्तिकेयस्तु
धर्तव्योदक्षिणभुजे । ब्रह्महत्यादिभिः पापैर्मुच्यतेना-
त्रसंशयः । सप्तवक्त्रोमहासेनअनन्तोनामनागराट् ।
गुरुतल्पादिभिः पापैर्मुच्यतेनात्रशंसयः । अष्टवक्त्रोम
हासेनः साक्षाद्देवोविनायकः । पृष्ठोदरकरेणापिसं-
स्पृशेद्वागुरुस्त्रियम् । एवमादीनिपपानिह्यतिपापानिस
र्वशः । विघ्नास्तस्यविनश्यन्तिमुक्तोयातिपरांगतिम् ।
एतेगुणाभवन्त्तस्यअष्टवक्त्रस्यधारणात् । नवास्योभैर-
वः साक्षाद्धारयेद्वामकेभुजे । कापिलोमुक्तिदः साक्षा
न्ममतुल्यफलंलभेत् । लक्षकोटिसहस्राणिब्रह्महत्यांकरो-
तियः । तत्सर्वंदहतेशीघ्रंनववक्त्रस्यधारणात् । दशवक्त्रोम-

हासेनः साक्षाद्देवोजनार्दनः ॥ ग्रहाश्चैवपिशाचाद्या वे-
तालाब्रह्मराक्षसाः । सर्पाश्चसर्वेनश्यन्तिदशवक्त्रस्यधार-
णात् । एकादशास्यरुद्राक्षोरुद्राएकादशस्मृताः । शि-
खायांधारयेन्नित्यंतस्यपुण्यफलंशृणु । अश्वमेधसहस्र-
स्यवाजपेयशतस्यच । हेमशृंगस्यलक्षस्यसम्यग्दत्तस्य
यत्फलम् । तत्फलंसमवाप्नोतिरुद्रवक्त्रस्यधारणात् । रु-
द्राक्षोद्वादशास्यस्तु कण्ठदेशेचधारयेत् आदित्यस्तु च्य-
तेनित्यंद्वादशार्कव्यवस्थितम् । एवंत्रयोसास्यश्चचतुर्दश-
मुखस्थथा । अनन्तफलदावेतौ गुणंवक्तुंनशक्यते । चतु
र्दशमुखंचैवंशिखायांधारयेद्बुधः । विनामंत्रेणरुद्रा-
क्षंयोधत्तेभुविमानवः । सयातिनरकंघोरं यावदिन्द्रा-
श्चतुर्दश । रुद्राक्षस्यप्रतिष्ठायां मंत्रःपंचाक्षरःस्मृतः । ॐ
त्र्यम्बकंवा अघोरमंत्रंविशेषेणप्रयोजयेत । पंचामृतं-
पंचगव्यंस्नानकालेप्रयोजयेत । अल्पेनापिचमन्त्रेणरुद्रा
क्षस्यद्विजोतम । प्रतिष्ठां विधिवत्कुर्यात्ततोधिकफलंल
भेत् । ततोयथासुमंत्रेणधारयेद्भक्तिसंयुतः । अथात्रमं
त्रोयथा ॐ ॐ भूँ शँनमः १ ॐ ॐ नमः २ ॐ ह्रीँ न-
मः ३ ॐ हूं नमः ४ ॐ हुं नम ५ ॐ ॐ हुं हुं नमः ६ ॐ सः
हूं नमः ७ ॐ हंनमः ८ ॐ ह्रींनमः ९ ॐ श्रींनमः १०
ॐ ह्रीँ हूं नमः ११ ॐ क्षांक्षौंनमः १२ ॐ नमः १३ ॐ
नमोनमः १४ अथप्रकारान्तरोक्तमंत्राः ॐ ऐं १ ॐ श्री
२ ॐ क्लूं ३ ॐ द्रः ४ ॐ ह्रीं ५ ॐ ह्रीं ६ ॐ ह्रीं ७

ॐ भ्रूं रां ८ ॐ ह्रां ९ ॐ ह्रीं १० ॐ ह्रीं ११ ॐ क्ष्रीं ह्मीं १२ ॐ उमां १३ ॐनमोनमः १४ यद्यप्येकादिचतुर्दशमुखरुद्राक्षेषु फलमंत्रविशेषाः सन्तितथापि सुलभत्वात्पंचवक्ररुद्राक्षं विधिपूर्वकंधारयेत्। पंचवक्त्रः स्वयंरुद्रः कालाग्निर्नामनामतः। अगम्यागमनेचैवअभक्ष्यस्यापिभक्षणे। मुच्यतेसर्वपापेभ्यः पंचवक्त्रस्यधारणात्। इत्युक्तेः ॐ हुंनमइतिप्रत्येकमष्टोत्तरशतंजप्त्वाम्भसाप्रक्षाल्यधारयेत् । लिंगपुराणेआयुष्मान्वलवान् श्रीमान् पुत्रवान्धनवान्सुधीः। वरमिष्टंलभेल्लिङ्गं पार्थिवंयः समर्चयेत् । तस्मात्पार्थिवंलिङ्गं ज्ञेयं सर्वार्थसाधनम्॥वार्क्षं वित्तप्रदंज्ञे यंस्फाटिकंसर्वकामदम् नार्मदंगिरिजंश्रेष्ठमन्यदपीहलिंगवत्। कालकौमुद्याम्। अक्षादल्पप्रमाणंहिनलिंगंकुत्रचिन्नरः। कुर्वीतांगुष्ठतोह्रस्वंनकदाचित्समाश्रयेदिति । अक्षोऽशीतिरक्तिका । ब्रह्मपुराणे। यावन्नदीयतेचा—र्घो भास्करायनिवेदितः। तावन्नपूजयेद्विष्णुं शंकरंचमहेश्वरीम्। सर्वत्रैवप्रशस्तोऽब्जः शिवसूर्यार्चनंविना। अब्जः शंखः। तल्लिङ्गं पूजयेन्मंत्रीसर्वदेवान्पृथक्पृथक्। देवीपुराणे। मृदाहरणसङ्घट्टौप्रतिष्ठाह्वानमेवच । स्नपनंपूजनंचैवविसर्ज्जनमतः परम ॥ हरोमहेश्वरश्चैवशूलपाणिः पिनाकधृक्। पशुपतिः शिवश्चैवमहादेवइतिक्रमात् । अत्रपूर्वोक्तसप्तकर्म्मणिपरवचनोक्तसप्तनामभिः क्रियास्वरूपविभक्तिम-

भिधाययथा यथंकार्याणि । अदृष्टार्थयोरर्थक्रमासंभवे-
पाठक्रमादेवावाहनात्प्राकप्रतिष्ठाग्राह्यं कुशासनदानव-
दितितत्रानुष्ठानम् । यथा ऊँ हरायनमइतिसृदाहर-
णम् । ऊँ महेश्वरायनमइतिसंघट्टनम् ऊँ शूलपाणये-
नमइतिप्राणप्रतिष्ठा । ततोध्यानम् ध्यायेन्नित्यंमहेशमि
त्यादिना । ततः ऊँ पिनाकधृषेनमइत्यावाह्य । ऊँ
पशुपतयेनमइतिस्नपनंविधाय । ऊँ शिवायनमइति-
पूजयेत । विसर्जनात्पूर्वंप्राच्यैशान्याद्यष्टदिक्षुवामावर्तेन-
पूजने ऊँ शर्वायक्षितिमूर्तयेनमः । पूर्वे । १ऊँ भवा-
यजलमूर्त्तयेनमः ऐशान्याम् २ ऊँ रुद्रायाग्निमूर्त्तयेनम
उत्तरे ३ऊँ । उग्रायवायुमूर्तयेनमः वायव्याम्ऊँ भीमाया
काशमूर्त्तयेनमः पश्चिमे ५ ऊँ पशुपतयेयजमानमूर्तयेन
मोनैऋत्याम् ६ऊँ महादेवायसोममूर्त्तयेनमः । दक्षिणे ७
ऊँ ईशानायसूर्यमूर्तयेनमः आग्नेय्याम् । मूर्तयोष्टौशि
वस्यैताः पूर्वादिक्रमयोगतः । आग्नेयान्ताः प्रयोज्या-
स्तुवेद्यांलिंगेशिवंयजेत् । नन्दिपुराणे । गोभूवस्त्रहिर-
ण्यादिबलिपुष्पांन्निवेदयेत् । न्नयोनमः शिवायेतिमंत्रः
सर्वार्थसाधकः । सर्वमंत्राधिकश्चायमोंकाराद्यः षडक्षरः ।
भविष्यपुराणेपंचाक्षरमुपक्रम्य अपवित्रः पवित्रोवास-
र्वावस्थांगतोपिवा॥महापातकयुक्तोपिमंत्रस्यस्यजपात्तथा ।
अधिकारीभवेत्सर्वइतिदेवोऽब्रवीच्छिवः । तथासर्वेषामे-
वपात्राणांपरंपात्रंमहेश्वरः पतन्तंधारयेद्यस्मादतीवन-

रकार्णवात्। शिवमुद्दिश्ययद्दत्तंसर्वकारणकारणं। तदनन्तफलंदातुर्भवतीहकिमद्भुतम्। शिवधर्मे तस्मात्पुष्पफलैस्तोयैः पत्रैरपिचयत्फलं। तदनन्तफलंज्ञेयं भक्ति रेवात्रकारणम्। भविष्ये लिङ्गानुलेपनंकार्यंदिव्यगन्धैस्तुगन्धिभिः। वर्षकोटिशतंदिव्यंशिवलोकेमहीयते। स्कन्दपुराणे शुष्काण्यपिचपत्राणिश्रीवृक्षस्यसदैवतु। दातव्यानिनरैर्भक्त्याशिवभक्तिमभीप्सुभिः। भविष्ये धत्तूरैरपियोनित्यंसकृत्पूजयतेशिववम्॥गोलक्षफलंप्राप्यशिवलोकेमहीयते। बिल्वपत्रैरनन्तैश्चयोलिंगंपूजयेत्सकृत्। सर्वपापविनिर्मुक्तः शिवलोकेमहीयते। तथाच सर्वकामप्रदंविल्वंमहा दारिद्र्यनाशनम्। विल्वपत्रात्परंनास्तियेनतुष्यतिशंकरः केशकीटापविद्धानिनिशिपर्युषितानिच। स्वयंपतितपुष्पाणित्यजेदुपहतान्यपि। देवदारु समेतंचसर्जश्रीवासकुन्दुरुम्। श्रीफलंचाज्यमिश्रंचदत्वाप्नोतिपरांगतिं। सर्जः शालरसः कुन्दुरुशैलेयम्। एभ्यः सौगन्धिकंधूपम् षट्सहस्रगुणोतरम्। अगुरुंशतसाहस्रंद्विगुणंचासितागुरुम्। गुग्गुलुंघृतसंयुक्तं साक्षाद्भवतिशंकरः। तैलेनापिहियोदद्याद्घृताभावेनमानवः। तेनदीपप्रदानेनशिववद्राजतेदिवि। नन्दिकेश्वरपुराणे। शालितंडुलप्रस्थस्यकुर्यादन्नंसुसंस्कृतम्। शिवायतंचरुंदद्याच्चतुर्दश्यां विशेषतः। शिवसर्वस्वेच एकमाम्रफलंपक्कं यः शिवाय-

निवेदयेत् । वर्षाणामयुतंभोगैःक्रीडतेशिवम-
न्दिरे । एकंमोचाफलंपक्कंयः शिवायनिवेदयेत् ।
वर्षलक्षंमहाभोगैः शिवलोकेमहीयते । नैवेद्यं घृतसंयु-
क्तंमधुपक्कंनिवेदयेत् । अग्निष्टोमस्ययज्ञस्यफलंप्राप्नो-
तिमानवः । शिवधर्मे लिंगवेदीभवेद्देवीलिंगंसाक्षान्महे-
श्वरः । तयोः संपूजनात्स्यातांदेवीदेवश्चपूजितौ। देवी-
पुराणे । सव्यंव्रजेत्ततोसव्यंप्रणालीं नैवलंघयेत् । एकी-
भूतमतोरुद्र यःकुर्यात्त्रिः प्रदक्षिणम् । क्षणा त्तस्यभवे-
न्मुक्तिर्नतस्यपुनरुद्भवः । भविष्ये । जानुभ्यांचैवपाणि-
भ्यांशिरसाचविचक्षणः । कृत्वाप्रणामंदेवेशेसर्वान्कामा-
नवाप्नुयात् महाभारते । सर्वलक्षणहीनो-
पियुक्तोवासर्वपातकैः । सर्वंतरतितत्पापंभवायशिरसा
नमन् । ततोवारंवारंप्रणम्य ॐ वाम देवायनमः इति
मन्त्रेणसंहारमुद्रयाविसृज्यतदुच्छिष्टेनचंडोग्रशूलपाणिं-
संपूज्यविष्वक्सेननिर्माल्ययुक्ताशिवनिर्माल्यंशिरसाधारयेत्।
अग्राह्यंशिवनिर्माल्यंपत्रंपुष्पंफलंजलम्। शालग्रामशि-
लास्पर्शात्सर्वंयातिप—वित्रतामिति ॥ अथपार्थिवलिं
गानांविशेषपूजाप्रकारः श्रीमंत्रमहोदधौ । यथा । सा-
धकः स्नात्वानित्यकर्मकृत्वाशुचिभुमिंगत्वाउपरिस्थांमृ
त्तिकामपाहृ त्य । हूँ पृथिव्यैनमइत्यभिमंत्र्यमृत्तिकां-
गृहीत्वातामवलोक्यनिः शर्करांकृत्वाशुद्धपात्रेनिधायशिव-
पूजार्थंनिदध्यात् । ततःशुभदिनेबालगणेशकुमाराभ्यो-

मन्त्री हरादिकात् सप्तमनूनपिपूजासिद्ध्यर्थंसद्गुरोस्स काशाद्गृह्णीयात् । ह्रींगंग्लौंगणपतयेग्लौंगंह्रींइतिगणे-शमंत्रः । ऐँक्षुँक्षुँक्लींकुमारायनमः । इतिकुमारमंत्रः । ऊँ नमोहराय । ऊँ नमोनहेश्वराय । ऊँ नमःशू-लपाणये । ऊँ नमः पिनाकिने । ऊँ नमः पशुपत-ये । ऊँ नमः शिवाय । ऊँ नमोमहादेवायइतिसप्त-मनूनपिसंगृह्यशुभदिनेस्वेष्टसिद्ध्यर्थंशिवार्चनमारभेत् । तद्यथा । कृतनित्यक्रियः सूर्यायार्घ्यं दत्वामृत्तिकामादाय। वमित्यभिमंत्रितेनजलेनाभिषिच्यस्वे ष्टप्रमाणांपिंडयेत्। तांपात्रेनिधायसंकल्पंकुर्यात्। सयथा। अमुकगोत्रस्यामु कशर्मणोममनोभिलषितकार्यसिद्ध्यर्थं यथासङ्ख्यकपा र्थिवलिंगपूजनमहंकरिष्येइतिसंकल्प्यमृत्पिंडान्मृदंगृही त्वागणपतिमंत्रेणवराभयलसत्पाणिकमलंबालगणेशं नि र्मायपीठेसंस्थाप्यस्वमंत्रेणसंपूज्यहरमंत्रेणऊँ नमोहराय इतिमंत्रेण शतमात्राधिकांमृदंगृहीत्वा । ऊँनमोम-हेश्वरायइतिमंत्रेणअंगुष्ठमानादधिकंवितस्त्यवधिमनो हरंलिंगंतुल्यप्रमाणंतुल्यरूपंरचयेत् । ततः ऊँनमःशू लपाणयेइतिलिंगंपीठेसंस्थापयेत् । ततोऽवशिष्टमृदा कुमारमंत्रेणकुमारंकृत्वालिंगपंक्त्यंतेसंस्थाप्यस्वमंत्रेणपू जयेत् । ततः प्रतिलिङ्गस्थंहरं । ऊँनमः पिनाकि-नेइतिमंत्रेणसमावाह्यध्यायेत् । तद्यथा । दक्षांगस्थं गजपतिमुखं प्राग्मृशन्दक्षदोष्णावामोरुस्थाद्रिपतित

नयांकेगुहंचापरेण । इष्टाभीतीपरकरयुगेधारय न्बि
न्दुकांतिरव्याद्भस्तन्त्रिभुवनमदोनीलकंठस्त्रिनेत्रः । ए
वंध्यात्वाऊँनमः पशुपतयेइतिमंत्रेणशिवंस्त्नापयेत् ।
ततः ऊँ नमः शिवायेतिमंत्रेणगन्धादीन्समर्प्य पूर्वा-
दिवामावर्तेनदशदिक्षुशर्वादीन्पूजयेत् । तद्यथा ।
ऊंशर्वायक्षितिमूर्तये नमः पूर्वे । ऊंभवायजलमूर्त
ये नमः ऐशान्यां । ऊंरुद्रायाग्निमूर्तते नमः उत्तरे ।
ऊंउग्रायवायुमूर्तये नमः वायव्याम् । ऊंभीमायाकशा-
मूर्तये नभः पश्चिमे । ऊंपशुपतये यजमानमूर्तये नमः
नैर्ऋत्याम् । ऊंमहादेवायसोममर्तये नमः दक्षिणे ।
ऊंईशानायसूर्यमूर्तये नमः अग्निकोणे ततइन्द्रादी-
न्वज्रादीनपिपूर्वादिदक्षिणावर्तेनपूजयेत् । ततोधू-
पंदीपंनैवेद्यंदत्वावारंवारंनत्वा प्रदक्षिणामर्द्धचंद्राकृतिं-
कृत्वामंत्रजपंकृत्वास्तवादिकंपठित्वा संहारमुद्रयाविसृ-
ज्यगणेशकार्तिकेयावपि विसृजेत् । अथकामनाभेदे
नध्यानमुक्तम् । तत्रैव । तद्यथा । धनपुत्रादिकामै
स्तुशिवोर्च्यः प्रोक्तलक्षणः । विद्याकामैश्चिन्तनीयः
परशुंहरिणंवरम् । ज्ञानमुद्रांदधद्धस्तैर्वटमूलमुपाश्रि-
तः ॥ अथसन्धिकरणार्थंध्यानम् । पुंसोर्विरुद्धयोः सन्धौ
कुर्याल्लिंगानिसाधकः । नदीतीरादपानीतमृदातानि
चपूजयेत् । तत्रध्येयोहरिहरः शंखपद्माहिशूलभृत् । इ
न्द्रनीलशरच्चन्द्रनिभोभूषणपुंजवान् । अधर्दपत्योर्वि

रोधशमनार्थंध्यानमाह। दंपत्योरविरोधार्थमर्द्धनारीश्वरः स्मृतः। पीयूषपूर्णकलशंदधत्पाशांकुशावपि। अथोच्चाटनमारणविद्वेषणार्थंध्यानम्। उच्चाटेमारणेद्वेषेध्यातव्यः पुनरीदृशः। कालीहस्तांबुजालम्बः शूलप्रोतस्त्वपांचयः। मुंडमालालसत्कंठोरावविव्रासिताखिलः। अथकार्यवशात्प्रयोगविधानमाह। पूजयेत्कार्यवशतोलक्षावधिसहस्रतः। लक्षंपार्थिवलिंगानांपूजनाद्भक्तिमुक्तिभाक्। लक्षंतुगुडलिंगानांपूजनात्पार्थिवोभवेत्। यानारीगुणलिंगानित्रिसहस्रंपूजयेत्सती। भर्त्तुः सुखमखंडंसाप्राप्यांतेपार्वतीभवेत्। नवनीतस्यलिंङ्गानि संपूज्येष्टमवाप्नुयात्। प्रातर्गोमयलिंगानिनित्यंयस्त्रीणिपूजयेत्। बृहतीबिल्वयोः पत्रैर्नैवेद्यंगुडमर्पयेत्। इष्टफलावाप्तिः। भस्मनागोमयस्यापिवालुकायास्तथाफलम्। क्रीडंतिबालकाभूमौलिंगंकृत्वारजोमयम्। पूजतिविनोदेनतेपिस्युः क्षितिनायकाः। एवंमासत्रयंकुर्वन्ननल्पंलभतेधनम्। एकादशैवलिंगानिगोमयोत्थानिपूजयेत्। प्रातर्मध्याह्नयोस्सायंनिशीथेप्रतिवासरम्। ससर्वाः संपदोयायात्षण्मासादेवमाचरन् एकादशयजेन्नित्यंशालिपिष्टमयानियः। लिंगानिमासमात्रेणसकलमषचयंदहेत्। स्फाटिकंपूजितंलिंगमेनोनिकरनाशनम्। सर्वकामप्रदंपुंसामुदुम्बरसमुद्भवम्। रेवामध्याश्मजंसर्वसिद्धिदंदुःखनाशनम्। यथाक

यंचिल्लिंगस्यपूजांनित्यंकुर्तेष्टदा। योयजेत्पिचुमन्दोत्थैः पत्रैर्गोमयजंशिवम्॥क्रुद्धं महेश्वरंध्यायम्सपराजयतेरिपून्। योलिंगंपूजयेन्नित्यंशिवभक्तिपरायणः। मेरुतुल्योपित-स्याशुपापराशिर्लयंव्रजेत्॥ दोग्ध्रीर्गास्तुरगांल्लक्षंयोद-द्याद्वेदपाठिने। पार्थिवंयोर्चयेल्लिंगंतयोर्ल्लिंगार्चकोथ-रः। चतुर्दश्यांतथाष्टम्यांपौर्णमास्यांविधुक्षये। पयसा-स्नापयेदीशंधरादानफलंव्रजेत् लिंगपूजांविधायाग्रेस्तोत्रं वाशतरुद्रियम्। प्रजपेत्तन्मनाभूत्वाशिवेस्वंविनिवेद-येत्। यत्संख्याकंयजेल्लिंगंतन्मितंहोममाचरेत्। आ-ज्यान्वितैस्तिलैरग्नौघृतैर्वापायसेनवा॥ शिवमंत्रेण-तस्यान्तेब्राह्मणानपिभोजयेत्। एवंकृतेसमस्तेष्टसिद्धि-र्भवतिनिश्चितम्॥ अथपूजायंत्रसंस्कारः। वामके-श्वरतंत्रे। भैरव्युवाच। चक्रभेदंमहादेवत्वत्प्रसादा-न्मयाश्रुतम्। इदानींश्रोतुमिच्छामिप्रतिष्ठाकर्मनिर्णय-म्। श्रीशंकरउवाच॥ शृणुदेविमहाभागेजगत्कारि-णिकौलिनि। यंत्रस्योद्धापनंकार्येसर्वकर्मणिनिर्णयम्। स्नात्वासंकल्पयेन्मंत्रीगुरोरर्चनमाचरन्। पंचगव्यंत-तः कृत्वाशिवमंत्रेणमंत्रितम्। तच्चक्रंनिःक्षिपेन्मंत्रीप्र-णवेनसमाकुलम्। तदुद्धृत्यततश्चक्रंस्थापयेत्स्वर्णपात्र-के। पंचामृतेनदुग्धेनशी-तलेनजलेनच। चन्दनेनसु-गन्धेनकस्तूरीकुंकुमेनच। पयोदधिघृतक्षौद्रशर्करादै-रनुक्रमात्। तोयधूपान्तरैः कुर्यात्पंचामृतविधिंपुनः।

हाटकैः कलशैर्देवीमष्टभिर्वारिपूरितैः। कषायजलसंपूर्णैः कारयेत्स्नानमुत्तमम्। स्नानंसमाप्यतांदेवींस्थापयेत्स्वर्णपात्रकै। स्पृष्ट्वापात्रंकुशाग्रेणगायत्र्याचाभिमंत्रयेत्। अष्टोत्तरशतंदेविदेवताभावसिद्धये। आत्मशुद्धिंततः कृत्वाषडङ्गैर्यजनंचरेत्। तत्रावाह्यमहादेवींजीवन्यासंचकारयेत्। उपचारैः षोडशभिर्महामुद्रादिभिः सदा। फलताम्बूलनैवेद्यै र्देवींतत्रसमर्चयेत्। पट्टसूत्रादिकंदद्याद्वस्त्रालंकारमेवच। मुकुरंचामरं घण्टांयथायोग्यंमहेश्वरि। सर्वमेतत्प्रयत्नेनदद्यादात्महितेरतः। ततोजपेत्सहस्त्रंचसकलेप्सितसिद्धये। बलिदानंततः कुर्यात्प्रणमेच्चक्रराजकम्। अष्टोत्तरशतंहुत्वासंपाताज्यंविनिः क्षिपेत्। होमकर्मण्यशक्तश्चेद्द्विगुणंजपमाचरेत् धेनुमेकांसमानीयस्वर्णशृंगाद्यलंकृताम्। गुरवेदक्षिणांदध्यात् ततोदेव्याविसर्जनमिति। अथपूजायंत्रसंस्कारप्रकारः। कृतनित्यक्रियः स्वस्तिवाचनं कृत्वासंकल्पंकुर्यात्। अद्येत्याद्यमुकगोत्रोमुकशर्माअमुकदेवतायाः पूजार्थममुकयंत्रसंस्कारमहंकरिष्ये इति संकल्प्यपंचगव्यमानीयह्रीमितिमंत्रेणाष्टोत्तरशतमभिमंत्र्यप्रणवेनयंत्रंपंचगव्येनिः क्षिपेत्। तस्मादुत्थाप्यपात्रान्तरेस्थापयेत्। ततः शीतजलकुंकुमकस्तूरीभिः स्नापयित्वाधूपंदद्यात्एवंदध्नाघृतेनमधुनाशर्करयाच। ततोष्टभिः कलशैः स्नापयेत्। कुंकुमरोचनाचन्दनमिश्रितैस्तो-

यैः । स्नापयेत् । सर्वत्रस्नानंतुमूलमंत्रेण । ततोयंत्रमुत्तो
ल्यकुशाग्रेणयंत्रेस्पृष्ट्वा ऊँ यंत्रराजायविद्महेमहामंत्राय
धीमहितन्नोयन्त्रः प्रचोदयात् । इत्यष्टोतरशतमभिमं-
त्र्यप्राणप्रतिष्ठांकुर्यात् । अस्यप्राणप्रतिष्ठामंत्रस्यब्रह्मवि
ष्णुमहेश्वराऋषयः ऋग्यजुःसामानिच्छंदांसिचैतन्यदे
वताप्राणप्रतिष्ठायांविनियोगः । आंह्रींक्रोंयंरंलंवंशंषं-
संहंहोंसः अमुकदेवतायाः प्राणइहप्राणाः एवंआं १३
अमुकदेवतायाजीवइहस्थितः । आं १३ अमुकदेव-
तायाः सर्वेन्द्रियाणिआं १३ अमुकदेवतायावाङ्मनश्च-
क्षुः श्रोत्रघ्राणप्राणाइहागत्यसुखंचिरंतिष्ठन्तुस्वहा ।
इतिप्राणान्प्रतिष्ठाप्यप्रकृतदेवतामावाह्यषोडशोपचारा-
दिनासंपूज्यषडंगेनपूजयेत् ततः पट्टसूत्रादिकंदत्वा
ष्टोतरसहस्रंजपेत् । अशक्तश्चेद्बलिंदद्यात् । ततो
ष्टोत्तरशतहोमंकृत्वा प्रत्याहुतिसंपातंदद्यात् । होमा-
शक्तौद्विगुणोजयः कार्यः । ततोदक्षिणांछिद्रावधारणं
कुर्यादितियंत्रसंस्कारः अथसुन्दरीयंत्रसंस्कारेतुकुशा-
ग्रेणस्पृष्ट्वाआमित्यादिनासामान्यतः प्रथमंप्राणप्रतिष्ठां-
कृत्वाजीवाकर्षिणींविद्यांयथाशक्तिजपेत् । यथाऊँ
ऐंह्रींश्रींह्स्रौः सहौः स्हौः आंह्रींक्रोंक्लीं गणपतिकालिके-
सौः सकलह्रींक्लींक्लींह्रींस्हौः ह्स्रौः श्रींह्रींऐंऊँ मूलगायंत्रीं
जपेत् ॥ मूलमंत्रमयि ॥ ततोयंत्रमध्येदेवीमागतां
विभाव्यषोडशोपचारैरर्चयेदितिशेषः ॥ आसीच्छ्रीक

रुणाकरोवुधवरः कारुण्यदानाकरः श्रुत्याचारविचार
सारचतुरो ज्योतिर्विदामग्रणीः । तत्पुत्रः पृथिवीशव
न्दितपदः श्रीशंभुनाथः कृतीशंभुध्यानबलेनशंभुसम
तांकाश्यामगादादरात् । तज्जस्तुतंत्राणिशिवोदितानि
विलोक्यशंभोः कृपयापवित्रम् । दीक्षाप्रकाशंकिल
जीवनाथश्चकारतंत्रज्ञमुदेविचित्रम् । शकेखाङ्कागभूसङ्-
ख्ये १७ ९० श्रीरामनवमीतिथौ । जाह्नवीतीरनिकट-
स्थितः श्रीमैथिलद्विजः ॥ इतिश्रीशंभुनाथात्मजश्रीजी
वनाथविरचितो दीक्षाप्रकाशः समाप्तः ॥

दृग्वार्धिग्रहभूमितवत्सरमाघवशितित्रिनेत्रतिथौ ॥
लक्ष्मीनारायण कविशोधितएषप्रकाशोत ॥ १ ॥ १९ ४२ ॥
ॐस्वस्तिश्रीगणपतयेनमः ॥ य द्विनिधाय हृदि स्थिर-
भावेपरमुपयाति सुख ह्खलु मर्त्यः ॥ श्रीगणराजतवाङ्घ्रियु
ग न्त त्सतत मह म्प्रणमामि भजामि ॥ १ ॥ सिद्धि म ध-
र्द्धि मुभे परदेव्यौ चमरसुशोभितपाणिसरोजे ॥ य श्चरि-
तै रनुरञ्जयति स्वै स्तमभिमुख प्रणमामि भवन्तम् ॥ २ ॥
श्रीमदलौकिकवैभवशोभि न्परिमितिवर्जितविघ्नहृदा-
ख्य ॥ सम्पद मेति नरः किमु ना।सौ तव पदपद्मयुग
म्भजते यः ॥ ३ ॥ सम्मुखता मधिगत्य नियत्या तव सुर-
वन्दित कुम्भिवरास्य ॥ य स्समुपैति न वाञ्छित मर्थं
स जननवो न्वद को।स्ति जगत्याम् ॥ ४ ॥ कोटिरवि-
द्युतिदैन्यविधायित्वदतिलसत्तनुसंस्मृतिकर्त्तुः ॥ मानस-

जाग्रदबोधतमोऽन्यं न किमु विनश्यति शैलसुताज ॥ ५ ॥
दीनतमं यदि मामधुना त्व मपतितशिरोमणि रेष वि-
हेयः ॥ निर्ज्जरवर्यनुतेति जहासि क्व तव गतं नु शरण्य
तया तत् ॥ ६ ॥ श्रीगिरिराजसुताङ्गभुवे ते भवतु मदीय
मिदं नम उच्चैः ॥ अस्तु न जातु तवाङ्घ्रिवियोगो मम
गणनायक भो इति याचे ॥ ७ ॥ यद्यपि सन्ति सुरा बह-
वोऽन्ये निजजनवाञ्छितदानसमर्थाः ॥ अस्ति सुरेश्व त-
थापि विना त्वां निजविपदन्तकर स्स्मृततिः कः ॥ ८ ॥
त्वा मपहाय दयैकपयोधि न्त्रिभुवनसेवित मर्त्तिनिहत्यै ॥
अन्य मिहा मर मर्च्चति यो ऽसौ सुमतिषु किं स्तवनीय-
विवेकः ॥ ९ ॥ कि म्बहुना भुवनाधिपवन्द्यं हृदि निदधे
चरणाब्ज मिद न्ते ॥ युक्त मिभास्य भवे दसद थो त त्कुरु
मुहु रस्तु नमो विभवे ते ॥ १० ॥ स्तोत्र मिदं शिवदं
शिवसूनो र्य इह पठे दनुरागभरेण ॥ सर्व विपद्रहित स्स
कृतीन्द्रः परसुखवार्द्धि निमग्नमना स्स्यात् ॥ ११ ॥ इति
श्रीमत्कौशल्यगोत्रोद्भवलक्ष्मीनारायणाह्वयकवितरवि
रचितं श्री गणपतिदशकस्तोत्रंसम्पूर्णम् ॥ १ ॥
ॐम् ॥ शुण्डादण्डविधूननेनकुरुतेयोदिग्गजान्दिग्गतान्
यस्याङ्घ्रिद्वयसेवनेननितरांयान्त्यन्तरायाःक्षयम्॥ देवा दे
वपृदाकुकिन्नरनरैर्य्यःप्रार्थितः प्रत्यहंश्रीढुण्ढिर्गणनायक-
स्सहगणैःकुर्य्याद्वरंमङ्गलम् ॥ १ ॥ योऽधीशोऽसुसदाम्भज-
न्तिविबुधायंयेनविश्वन्ततंयस्मैस्वच्छमतिस्तपः प्रकुरुते-

यस्माज्जनोयातिशम् ॥ कारुण्यम्भवहारियस्यसकलं-
यस्मिन्प्रयातिस्थितिं श्रीविश्वेश्वर ईश्वर स्सजगता
ङ्कुर्य्याद्वरंमङ्गलम् ॥ २ ॥ प्रालेयाद्रिकुलंययास्वजनु-
षापूतेनसम्यावितंसर्वस्यक्षुदभिक्षयायसततन्दीक्षा गृही-
तायया ॥ ब्रह्मोपेन्द्रमहेन्द्ररुद्र वरुणैर्य्यासेवितासिद्धये
सादेवीगिरिजागिरीशमहिषीकुर्य्याद्वरंमङ्गलम् ॥ ३ ॥ नि-
श्शेषामरमानसार्त्तिलतिकास न्तानसंवर्द्धकश्रीमत्तारकदे-
वतारिमुदिरध्वंसोग्रवात्याचयः ॥ चञ्चत्संशितशक्तिपु स्त-
कधरः केकीन्द्रसद्वाहन स्सेनानीर्गिरिजामनो ऽम्बुजरविः
कुर्य्याद्वरंमङ्गलम् ॥ ४ ॥ स्वस्मिन्नम्भसिम ज्जतोभवभयाज्ज
न्तोस्समुद्धारिणीपापानाम्प रिहारिणीस्मरणत स्स्रोतस्त्रयी
धारिणी ॥ श्रीशैलेशसुतेशवद्ध विलसत्केशाटवीचारिणी-
श्रीगङ्गाशिवका रिणीसुभजताङ्कुर्य्याद्वरंमङ्गलम् ॥ ५ ॥ प्र-
त्यग्राम्बुदकान्तकान्तिरुचिरो मालीकपालीबली चञ्चत्के-
शभरच्छटाप्रतिहतब्रह्माण्डखण्डावधिः ॥ दिग्वासाभुजगे-
न्द्रभूषणकृतोन्नृत्यप्रमोदान्वितः श्रीमान्भैरवईडितस्सुरव
रैः कुर्य्याद्वरंमङ्गलम् ॥ ६ ॥ नीलेन्द्रोपलदीधितिर्न्नलिनहृक्क
न्दर्प्पदर्प्पापहृत्सत्पीताम्बरभृत्परार्द्ध्यमणि भृत्सौवर्णभूषा-
वृतः ॥ शङ्खाम्भोजगदासुदर्शनधरः श्रीमान्दिवौकोवर स्ते
जोधामसमाधवोमधुरिपुः कुर्य्याद्वरंमङ्गलम् ॥ ७ ॥ प्रौढप्रो-
ल्लसदन्नताप्रमथनोप्रोद्यत्प्रभा भास्वरादैत्य द्वेष णदीर्घदै
न्यदलनेदीक्षाव्रतान्दीक्षिका ॥ स्वीयस्वान्तमहाधिसादनस

मुत्सववांसिसंसेवितादुर्ग्गादुर्ग्गे विनाशिनीदुरितहृत्कुर्य्याद्द्वरंमङ्गलम् ॥ ८ ॥ यद्वासीवृजिनव्रजैरधिगतोहीनोऽपिजात्योच्चकैर्न्निर्विद्रो प्यनवद्यकर्म्मविमुखोमुग्धोऽपिहिंस्रोत्तमः ॥ मर्त्त्यो यातिसुखेनयोगिभि रहोदुष्प्रापमैशम्पदं साकाशीगिरिजापतेः प्रियतमाकुर्य्याद्द्वरंमङ्गलम् ॥ ९ ॥ कस्से व्योगुणिनाचदात्ममहिमाकेनेहसन्तन्यतेकेनाज्ञाघट जस्यचारुचरितापत्निर्न्नकंलङ्घते ॥ राज्ञांमूर्द्धनिरत्नवारुचिरंहैमङ्गक्किंराजते सत्प्रश्नोत्तरमध्यवर्णभणिताकुर्याद्वरंमङ्गलम् ॥ १० ॥ मङ्गलदशकमिदंयः पठतिचभक्त्याश्रृणोति यश्चापि ॥ मङ्गलमिहखलुलभते जातुनलभतेतदन्यत्सः॥११

इति श्रीमत्कौशल्यगोत्रोद्भवलक्ष्मीनारायणाह्वयकविवरविरचितंमङ्गलदशकस्तोत्रंसम्पूर्णम् ॥ ५ ॥

सश्रीकः कत्रिना विन्ध्येन अश्वस्थम् किरीटम्

ओम् ॥ प्रातस्स्मरामिकरुणा निधिमीशवेधः क्षीराब्धिजेश सुरराजनताङ्घ्रिपद्मम् ॥ नत्यैववाञ्छितफलप्रदमार्त्तबन्धुंमोहान्धकार तरणिङ्करिपुङ्गवास्यम् ॥१॥ प्रातस्स्मरामि तिमिरप्रचुरप्रसारप्रोद्धारकारिकिरणप्रकरप्रचण्डम् ॥ प्रोद्दण्डदुष्कृतभरच्छिदुरंसुरेज्यन्त्रै लोक्यपाविनमनन्तविभूतिमर्कम् ॥ २ ॥ प्रात स्स्मरामिकुटिलामलकुन्तलाढ्यम्फुल्लारविन्दवदनंनवनीरदाभम् ॥ वैकुण्ठवासिनमजादिसमर्चिताङ्घ्रिंश्रीदंश्रियः पतिमनन्तमजम्मुरारिम् ॥३ ॥ प्रातस्स्मरामिविपदुद्धरणञ्जनानाम्ब्रह्मादिवन्द्यचरणङ्करणंसुखाना

म् ॥ श्रीशैलराजतनयाञ्चित वामभागम्भाग्यंविदाम्भव-
भिदम्भगवन्तमीशम् ॥४॥ प्रातस्स्मरामिभवभीतिवितोश
दक्षन्दैत्यान्वयक्षयकरञ्जडताविपक्षम् ॥ ब्रह्माद्यचिन्त्यम-
हिमत्रिजगत्प्रगेयम्ब्रह्मा यडकोटि जनकम्भवभागधेयम् ५
प्रातस्स्मराम्यखिललोकवि धानशक्तम्भक्तानुकम्पिनमु
दारसमञ्जमाद्यम् ॥ कारुण्यराशिममरे डितमम्बुजस्थम्प्रा
ज्यप्रकृष्टविभवंवरदंविरिञ्चिम् ॥ ६ ॥ प्रातस्स्मरामिदुरि-
ताटविकोग्रदावन्दावानलञ्च विमुदारतरप्रभावम् ॥ रु-
द्रावतारमतिरौ द्रतमीचरारिं श्रीमन्तमक्ष हरमञ्जनिकाकु-
मारम् ७ ॥ प्रातस्स्मरामिगगनस्पृशमुग्रकाय म्प्रत्य-
ग्रवारिदरुचिंरुचिरोरुगायम् ॥ घोराट्टहासपरिपूरितदिग्द
लान्तंसन्तंसुरेषुविदितम्भुविभै रवन्तम् ॥ ८ ॥ प्रातःपठत्य
मलबुद्धिरुदारचेताभक्त्याव सन्ततिलकाष्टकमुत्तमंयः ॥ नि
र्द्धूयकल्मषभरंसुकृतीससद्योलब्ध्वे हकीर्त्तिमचलांमहदेति
सौख्यम् ॥९॥ इतिश्रीमत्कौशल्यगोत्रोद्भवलक्ष्मीनारायणा
हूयकविवरविरचितम्प्रातस्समरणा ष्टकस्तोत्रंसम्पूर्णम् ॥
ओम् ॥ शरणगजनहृष्टांसिंहपृष्ठोपविष्टांहरिपुरहरवेधो-
मूर्द्धघृष्टाङ्घ्रिपृष्ठाम् ॥ विबुधवरवरिष्ठान्दुष्टचेतोदविष्ठा-
सुगुणगणगरिष्ठान्देव्यहन्त्वाम्प्रपद्ये ॥१ ॥ शरणगपरि-
पात्रींसम्पदोघप्रदात्रींसकलभुवनधात्रींसन्मतेर्स्सविधा-
त्रीम् ॥ निखिलकलुषभेत्रींशेमुषीसम्प्रणेत्रींसुररिपुपरि
जेत्रीन्देव्यहन्त्वांनमामि ॥ २ ॥ क्षितिधरवरकन्यसर्वदे-

वाग्रगणेयत्रिभुवनतलधन्येतारितान्येशरणेत ॥ क्षणम-
पियतचित्ताभक्तिविन्नास्स्वचित्तेनिदधतिभवतींयेसंसृतिं
यान्तिकित्ते ॥ ३॥ भगवतिमयिदीनेपापकर्म्माम्बुमीने-
सुभगगुणविहीनेकामकोपादि लीने ॥ कुरुसकरुणदृष्टि-
क्षे पमक्षे पवर्ज्जेशरणगसमुपेक्षाकीर्त्ति हेतुःकिमार्ये ॥
॥ ४ ॥ अमितदुरितूलव्रातदाहेकृशानुःकुमतितिमिरभार
च्छेदनेतीक्ष्णभानुः ॥ शरणगजनकामप्रापणेकामधेनु-
र्ज्जननिजननबाधाम्बाधतान्त्वतयदाब्जम् ॥ ५॥ चि
तदुरितभराणांसाधुनिन्दापराणाङ्कुपथरतनराणांहिंसका
ग्रेसराणाम् ॥ भगवतिहतमेनस्त्वत्प्रसादान्नराणान्त्य-
जतुतदपिमान्तं किङ्करङ्किङ्कराणाम् ॥ ६ ॥ सुकृतभर-
हरेभ्योऽ कीर्त्त्यसम्पत्करेभ्यो भवभयजनकेभ्योदीनता-
हेतुकेभ्यः ॥ शिवतरुखनकेभ्योऽदैवकामादिकेभ्योम-
मकुरुपरिमोक्षं मङ्क्षु विश्वेश्वरित्वम् ॥ ७ ॥ त्वमसि-
जननिदेवोदेवतादेवताना म्भगवतिजगदम्बक्षेमसम्प-
त्प्रदात्वम् ॥ सुरनुतपदपद्मेमानसंमेशिशोस्ते चरणयु
गलसेवामाश्रयत्वेवनित्यम् ॥ ८ ॥ देव्यष्टकमिदंरम्य-
न्त्रिकालंयःपठेन्नरः ॥ चत्वारितस्यवर्द्धं रन्त्यायुःकीर्त्ति-
र्य्यशोबलम ॥ ९ ॥ इतिश्रीमत्कौशल्यगोत्रोद्भवल-
क्ष्मीनारायणाह्वयकविवरविरचितंश्रीदेव्यष्टकम् ॥

——००——

पृ. ५ ॥कुलाकुलचक्रम्॥१ पं. ११

| वायु | अग्नि | पृथ्वी | जल | आकाश |
|---|---|---|---|---|
| अ | इ | उ | ऋ | लृ |
| आ | ई | ऊ | ॠ | ॡ |
| ए | ऐ | औ | ओ | अं |
| क | ख | ग | घ | ङ |
| च | छ | ज | झ | ञ |
| ट | ठ | ड | ढ | ण |
| त | थ | द | ध | न |
| प | फ | ब | भ | म |
| य | र | ल | व | श |
| ष | क्ष | व | स | ह |
| | | | | |

पृ. ६ राशिचक्रम् २ पं. ८

वृष मेष मीन

मिथुन: ऋ ॠ लृ ॡ — उ ऊ ऋ

मेष: अ आ इ ई

मीन: यरलव

कुंभ: पफबभम

कर्क: ए ऐ

मकर: तथदधन

सिंह: ओ औ — अं अः शषस हळक्ष

कन्या: क ख ग घ ङ

वृश्चिक: च छ ज झ ञ — ट ठ ड ढ ण

धनु

कन्या तुला वृश्चिक

## अथनक्षत्रचक्रम् ३

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| अ आ<br>अश्विनी<br>देवगण | इ<br>भरणी<br>नर | ई उ ऊ<br>कृतिका<br>राक्षस | ऋ ॠ ऌ ॡ<br>रोहिणी<br>नर | ए<br>मृग<br>देव | ऐ<br>आर्द्रा<br>नर | ओ औ<br>पुनर्वसु<br>देव | क<br>पुष्य<br>देव | ख ग<br>अश्लेषा<br>राक्षस |
| घ ङ<br>मघा<br>राक्षस | च<br>पूर्वा<br>नर | छ ज<br>उत्तरा<br>नर | झ ञ<br>हस्त<br>देव | ट ठ<br>चित्रा<br>राक्षस | ड<br>स्वाती<br>देव | ढ ण<br>विशाखा<br>राक्षस | त थ द<br>अनुराधा<br>देव | ध<br>ज्येष्ठा<br>राक्षस |
| न प फ<br>मूल<br>राक्षस | ब<br>पू॰षाढ<br>नर | भ<br>उ॰षाढ<br>नर | म<br>श्रवण<br>देव | य र<br>धनिष्ठा<br>राक्षस | ल<br>शतभिषा<br>राक्षस | व श<br>पू॰भाद्र<br>नर | ष स ह<br>उ॰भाद्र<br>नर | अं अः क्ष त्र<br>रेवती<br>देवगण |

पृ. ९ ३ पं. ३

| सिद्धः | अकडमचक्रम् ४ | | साध्यः |
|---|---|---|---|
| अक यह | उङप | आखद | ऊचप |
| ओड़व | लृझम | औढश | लृञप |
| इघने | ऋजभ | ईगध | ॠछव |
| अतस | ऐचल | अंणष | एटर |
| अरिः | अकथहचक्रम् | | सुसिद्धः |

पृ. १३ ५ पं. ११

अंटब

अ
क
ड
म

अकड
मचक्रम्

औञफ

घनलई

पृ. १३ ऋणधनचक्रम् ६ पं. ११

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| १४ | ५४ | ६ | ४८ | ७५ | ३६ | २८ | २४ | ७२ | ८० | ९९ | गुणितांकाः |
| १४ | २७ | २ | १२ | १५ | ६ | ४ | ३ | ८ | ८ | ९ | मन्त्रांकाः |
| ६ | ६ | ६ | ० | १ | ४ | ४ | ० | ० | ० | ३ | अष्टभक्तशेषांकाः |
| अआ | इई | उऊ | ऋॠ | लृॡ | ए | ऐ | ओ | औ | अं | अः | |
| क | ख | ग | घ | ङ | च | छ | ज | झ | ञ | ट | |
| ठ | ड | ढ | ण | त | थ | द | ध | न | प | फ | |
| ब | भ | म | य | र | ल | व | श | ष | स | ह | |
| २ | २ | ५ | ० | ० | २ | १ | ० | ४ | ४ | १ | साधकांकाः |
| १० | १ | ७ | ४ | ८ | ३ | ७ | ५ | ४ | ६ | ३ | |

पृ. १५ चतुष्कचक्रम् ७ पं. १

| | | |
|---|---|---|
| | क ङ<br>ओ ख<br>लृ ड<br>उ थ<br>अ प<br>ह म | |
| ठ त न भ ल स<br>घ अः ऐं ऋ ई | व | आ ऊ ल‍ॄ औ ख च ञ<br>ढ द फ य श छ |
| | क्ष ई<br>ष ऋ<br>र ए<br>ब अं<br>ध<br>ण ग<br>ट छ | |

| पृ.१७ | षट्कोणयन्त्रम् ८ | पं.८ |
|---|---|---|

अ
उ ध
ऋ क म क्ष

आ ऐ ख
ज ढ
न थ
य

ऊ अः च ठ द
भ श

इ ओ
ग झ ण
प र ह

षलबउ
अं ङ दक्ष

ई औ घ ञ
त फ ल
ळ

| पृ.१८ | | पं.१३ |
|---|---|---|

| ईशानः | इन्द्रः<br>नवग्रहचक्रम् ९ | अग्निः |
|---|---|---|
| अंगुल ६० अधिदेवो विष्णु<br>बुधः<br>प्रत्यधिदेव<br>श्चित्रगुप्तः | अंगुल १ अधिदेव<br>शुक्रः इन्द्रः<br>प्रत्यधिदेवताशची | अंगुल २४ अधिदेव<br>चन्द्रः उमा<br>प्रत्यधिदेवआपः |
| अं ८ अधिदेवो<br>ब्रह्मा<br>गुरुः<br>प्रत्यधि<br>देवःकुवेरः | अं १२ अधिदेवोऽग्निः<br>सूर्यः<br>प्रत्यधिदेवईश्वरः | अंगुल २२ अधिदेवः<br>कुमारः<br>मं<br>प्रत्यधिदेवःक्षितिः |
| अं १४ केतुः अधिदेवः<br>कालः<br>प्रत्यधिदेवः सूर्य्यः | अं ७ अधिदेवो<br>यमः<br>प्रत्यधिदेवः<br>प्रजापतिः<br>शनिः | अं १२ अधिदेवः<br>राहुः श्चित्रगुप्तः<br>प्रत्यधिदेवोब्रह्मा. |
| वायुः | वरुणः | नैर्ऋतिः |

| पृ. २२ | मन्त्रसंस्कारार्थं मातृकायन्त्रः १० | पं. २ |
|---|---|---|




पृ. ३१ पं. १२

११

भूतलिपियन्त्रः

अइउऋलृ
एऐओऔ
हयवरल
ङकखघग
ञचछझज
णटठढड
नतथधद
मपफभब
शषस

| पृ. ५२ | कूर्मचक्रम् १२ | पं. २ |
|---|---|---|

| लक्ष | कखगघङ | | | चछजझञ |
|---|---|---|---|---|
| शषसह | अंअः | अआ | इई | टठडढण |
| | ओऔ | | उऊ | |
| | एऐ | लृॡ | ऋॠ | |
| यरलव | पफबभम | | | तथदधन |

पृ. ६५ अन्य प्रकारकीयन्त्र: १३ पं. २

रं रं रं रं रं रं
रं रा रंरं रा रंरं मा रंरं य रंरं न रंरं मः रं
रं रं रं रं रं रं

पृ. ६६ पं. ४

अथन्यासोसुख्यः॥ पञ्चायतनपूजायन्त्र: १४

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| ग | दु | सूर्य | दुर्गा | सू | दु | विष्णु | दु | ग | सू |
| शिव | | विष्णु | | गणेश | | सूर्य्य | | दुर्गा | |
| सू | वि | ग | शि | शि | वि | ग | शि | शि | वि |

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| वि | शि | शि | ग | वि | सू | शि | ग | वि | शि |
| दुर्गा | | विष्णु | | शिव | | सूर्य्य | | गणेश | |
| सू | ग | दु | सू | दु | सू | दु | वि | पार्वती | सू |